अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३२ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २००७ ई०

प्रधानसम्पादकः
प्रो० वाचस्पति उपाध्यायः
कुलपतिः

सम्पादकः
प्रो० रमेशकुमारपाण्डेयः



प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३२ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २००७ ई०

प्रधानसम्पादकः

प्रो० वाचस्पति उपाध्यायः

कुलपतिः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

**सम्पादकमण्डलम्**

**प्रो० (श्रीमती) अमिता शर्मा**

**प्रो० जयकान्तसिंहशर्मा**

**सम्पादकः**

**प्रो० रमेशकुमारपाण्डेयः**

**मुद्रणसहायकः**

**डॉ० ज्ञानधरपाठकः**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

सम्पादकः

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# नैवेद्यम्

इदमवितथं यन्मानवचेतना निसर्गत एव इन्द्रियमनोऽनुगतत्वेन पुरोदृश्यमानस्य परिचयमधिगन्तुं प्रयतते, सा च न केवलं तत्परिचयादेव तृप्यति अपितु अत्र निगूढं ज्ञानमवाप्तुमुद्दीपयति, बाह्यखण्डस्य परिचयमाश्रित्य मानवः कर्मणि भोगे च प्रवर्तते किन्तु तादृशाभ्यां कर्मभोगाभ्यां न तस्य शान्तेरधिगतिः, नात्र तस्याबाधस्वाधीनताया अनुभूतिः, न च पूर्णताया आस्वादः। अत्र सर्वदाऽभावबोधो दुःखबोधोऽशान्तिश्च परितः समेधमाना इवानुभूयन्ते। अतस्तदपनेतुं निविडतरपरिचये दृढाग्रहवान् भवति। कामम् भौतिकवस्तुरहस्यपरिज्ञाने प्रवर्तते वैदेशिकगणो भौतिकोपकरणेन, किन्तु भारतीया सर्वतोव्यापिनी विद्यासाधना, तपःस्वाध्यायलब्ध्वां तत्त्वानुभूतिमाश्रित्य विद्यते, अत्र या प्रवाहमयी विज्ञानधारा सा न जडविज्ञानमेवापितु चिद्विज्ञानमपि। यत्प्रसादेनैव समत्वदर्शनम् अविद्याग्रन्थिविमोकः समस्तसंशयविघातश्च जायते च। चञ्चलञ्च चित्तमन्तर्मुखं सत्समाधानमभ्युपैति। ज्ञानमन्तरेण च प्रभवति कोऽपि ऐहलौकिकं पारलौकिकं वा लक्ष्यं साधयितुम्। तदेव चोपाय उपेयञ्चेति, तस्यैव प्रत्यगात्मरूपत्वात्तपःस्वाध्यायनितरा ऋषयो दिव्यकरणकत्वेन निरावरणं तद्रहस्यं साक्षाच्चक्रुः। सैव वेदादौ निरूपिता भारतीयविद्या दार्शनिकविवेचनशैल्या परिशीलिता सङ्कलिता महामनीषिभिः प्रकाशिता।

इयं चिरप्रदीपज्ञानदीपकवदनाद्यनेहसो बाभासमानाया आलयं प्रकाशितायाः संस्कृतेर्मूलमभिषिञ्चन्त्या अस्या तरलज्योत्स्नायां किमपि तादृशमेवामरत्वम्। इयं खलु सर्वतो रक्षणीयो निधिरिव भारतस्य, यस्य समक्षं सकलं सभ्यं राष्ट्रजातं विश्वस्य श्रद्धया नतमस्तकमभूत् स्थास्यति च।

महतामोदेनेदं निवेद्यते महद्भ्यो विद्वद्भ्यो यदियं करपल्लवसङ्गिनी शोधप्रभा स्वकलितनिबन्धामोदेन भौमान् सुमनसो विनोदयेत्। एतदाकलनादिविधौ परिश्राम्यद्भ्यो यत्नमिमं सफलयद्भ्यश्च भूरि मङ्गलं व्याहरामि।

प्रो० वाचस्पति उपाध्यायः

कुलपतिः

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्णनिबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

भारतीयसंस्कृतौ संस्कारस्य महत्त्वपूर्णं स्थानं विद्यते। वस्तुतः कार्यसम्पादनयोग्यता संस्कारादेव जायते। अस्मादेव कारणात् भिन्नाः संस्काराः भिन्नानां कार्याणां योग्यताधानहेतवो भवन्ति इति प्रसिद्धिः। वेदविहितविविधकार्यसम्पादनार्थं विविधाः संस्काराः धर्मशास्त्रकारैः समुपदिष्टाः सन्ति। तेषु शिक्षासम्बन्धिनोऽपि नैके संस्काराः सन्ति। संस्कारानामभावात् विद्याभ्यासोऽपि अनुदिनं क्षीयते। सत्यप्यभ्यासे तत्र तेजस्वितायाः अभावः सुतरां दृश्यते। तेजस्विनी विद्या न केवलं विद्यावतामुपकारायापितु समाजस्य देशस्य च लाभाय जायते। विद्यावतां तु सर्वकार्यसिद्धिसूत्रं तु विद्यैव भवति। उक्तञ्चास्ति–

**श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि।**
**संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः।।**

आधुनिककाले भौतिकविज्ञानादिविषये प्रायः छात्राणां रुचिः जायते। इमाः सर्वा विद्याः लोकोपकाराय किन्तु भौतिकजीवनमेवाधिकृत्य केवलम्। आध्यात्मिकजीवनविकासे मानवमूल्यविकासे च या विद्या अपेक्षिता सा भिन्नैव भवति। तस्याः विकासायैव 'षडङ्गो वेदोऽध्येतव्यः' इत्युद्घोषः महर्षिणां श्रूयते। वेदानामध्ययनं तदङ्गानां, तदुपकारकाणां शास्त्राणां सम्यक् परिशीलनेनैव भवति। 'वेदात्सर्वं प्रसिद्ध्यति' इति कथनस्येदमेव तात्पर्यं यत् ज्ञानस्य मूलं वेदेष्वेव प्रतिष्ठितमस्ति। तदेव ज्ञानं विविधेषु शास्त्रेषु भिन्न-भिन्नमार्गेण प्रकाशितं विलसति। शास्त्राणां माध्यमेन वैदिकज्ञानस्यैव परिप्रकाशः शनैः शनैः जायते।

३२ वर्षे अङ्केऽस्मिन् विविधविषयविश्लेषपराः द्वादशलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

प्रो० रमेशकुमारपाण्डेयः
सम्पादकः

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# विषयानुक्रमणिका

## संस्कृतविभागः



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

## हिन्दी विभाग



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# बाणभट्टस्य शाब्दी क्रीडा

प्रो. रमाशङ्करमिश्रः

सूच्यं सन्दधती, क्वचित् क्वचिदपि व्यङ्ग्यार्थमाबिभ्रती,
श्लिष्टं क्लिष्टतरार्थमप्यतितरां सम्बोधयन्ती मुदा।

श्लेष-भ्रान्ति-विरोध-रूपक-परीसंख्योपमोत्प्रेक्षणै-
श्चेतःप्रीतिकरी न कस्य भुवने बाणस्य कादम्बरी। (निबन्ध-प्रणेतुरेव)

आ सर्वत्र गभीर-धीर-कविता-विन्ध्याटवी-चातुरी।
सञ्चारी कवि-कुम्भि-कुम्भ-भिदुरो बाणस्तु पञ्चाननः॥

बाणभट्टो नाम संस्कृत-साहित्यनिरवद्य-गद्यकाननस्य अप्रतिभटः पञ्चानन एव, यो गद्यावली-निन्ध्याटव्याः प्रतिवीथि सिंहनादैस्समं प्रतिष्ठतेतराम्। अलङ्कृत-समासान्त-पदाढ्य-वाक्यानां निरर्गल-धारानिःस्यन्दने स जलदागम-वाहिनीस्तरलतरतरङ्गवतीस्तरङ्गिणीरपि व्यक्करोतीव। क्वचित् क्वचित्तु सरस-भावव्यूह-प्रवाहैर्वैदर्भी-रूपमपूर्वं व्यञ्जनापथपथिकीकरोति। गौडी वैदर्भीमपि वाक्यवर्त्मनि समवतारयन्नयं मध्यममार्गमालम्बते। बाणोच्छिष्टं पद-कदम्बकं संस्प्रष्टुकामास्तिलकमञ्जरीकार-धनपालादयोऽपि बाण-पदबाणतिग्मतां न चुचुम्बुरिति बाणस्य अप्रतिमता अनिच्छिन्नैव।

वासवदत्ताकृता सुबन्धुना गद्य-बन्धन-बन्धुरबन्धुना या हि कृत्रिम-गद्यवीथी-चातुरी पल्लविता, तस्याः प्रौढस्निग्धच्छाया बाणभट्टीय-गद्य-निकुञ्जेषु साधु लोचनगोचरीभवति। सुबन्धु-पथावलम्बी बाणः स्वीय-पद-वैदग्धी-वैशिष्ट्योपन्यासैः कीलिदास-माघ-भवभूतीनपि अतिशेते। यद्यपि कालिदास इव सरसोदात्तभाव-तारल्यं बाणगद्यावली न संवहति तथापि सानुप्रास-समस्तपदावलीझङ्कार-निर्वाहे माघ-भवभूत्यादि-तुलनायां बाणस्तु अप्रतिममेव पदं धत्ते।

प्राकृतिक-वर्णनप्रसङ्गोपेत-बिम्बग्राहिणी बाण-वर्णना माघ-भवभूत्यादि-विलक्षणैव। क्वचित्तु श्लेष-विरोधाभास-बहुलेषु गद्यानुच्छेदेषु तदीया रम्या प्रकृति-वर्णनापि नैरस्यचुम्बिनी क्लिष्टकल्पनातल्पशायिनी च प्रतीयते। क्वचित्तु सुबन्धुप्रियां क्लिष्ट-क्लिष्टां शब्दाडम्परमयीं सरणिमाश्रयन् बाण-भट्टो रसिक-रसापानक-पान-कालिक-गड्डुतामुपस्थाप-यति। क्वचिच्च बाण-गद्यधाराया अजस्रं माधुर्य्य-स्रोतश्चर्वणाचतुरान् सहृदयान् निरस्त-वेद्यान्तरसम्पर्कान् समदान् विधत्ते। शब्दसम्राडपि बाणो रसपेशलतामर्थवैदग्धीं च न मनागपि जिहासति। केनचित् सूक्तिकृता साधूक्तम्—



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वगीश्वरं हन्त भजेऽभिनन्दमर्थेश्वरं वाक्पतिराजदेवम्।
रसेश्वरं नौमि च कालिदासं वाणन्तु सर्वेश्वरमानतोऽस्मि॥

ख्रीष्टीय-सप्तमशतीपूर्वार्धभागमधिष्ठितोऽयं महाकवि-महाराज-हर्षवर्धन-कविसभामाणिक्यदीपोपमान् मयूर-दिवाकर-धावकादीनतिशेते स्म काव्यगुणोत्कर्ष-वर्षणैः। बाणभट्टीय-रचनासु कादम्बरी-हर्षचरिताख्यं गद्यकाव्यद्वयं चण्डीशतकाख्यं स्तोत्रकाव्यमेकं परिगण्यते। देवीशतकाभिधानं स्तोत्रकाव्यान्तरन्तु नवमशतीसमुद्भूतेन ध्वन्यालोककृता आनन्द-वर्धनेन सङ्गुम्फितमिति विदन्त्येव विदितवेदितव्यास्तत्त्वविदः।

हर्षचरित-गता कादम्बरीनिबद्धा च पदावली यथा शाब्दीं विच्छित्तिरेखां समालिङ्गन्ती विलोक्यते तथैव चण्डीशतकमपि गाढपद-बन्धमयीं शाब्दीं क्रीडामनुधावति।

निदर्शनमिदं दृश्यताम्—

विद्राणे रुद्रबृन्दे, सवितरि तरले, वज्रिणि ध्वस्तवज्रे,
जाताशङ्के शशाङ्के, विरमति मरुति, त्यक्तवैरे कुवेरे।
वैकुण्ठे कुण्ठितास्त्रे, महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती नः शमयतु दुरितं भूरिभावा भवानी॥

परमोत्कृष्ट-निरवद्य-गद्यकलाकलापकलितया सुललितया कादम्बरी-रचनया तु बाणो नूनमेव गुणाढ्यगुम्फितां बृहत्कथां सुबन्धु-निबद्धां वासवदत्तां च तिरश्चिकीर्षतीति तदीयेनैव वाक्यचयेन प्रमीयते। बाणो हि कादम्बरी-मुखे पद्यमुखेन व्याजहारः—

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोह-मलीमसान्धया।
अलब्धवैदग्ध्य-विलासमुग्धया धिया निबद्धेयमतिद्वयी कथा॥

अहो! कीदृशमिदमपूर्वविनय-नयोन्नीतं मन्दाहङ्कार-झङ्कारस्फीतं कौशलम्।

अष्टोच्छ्वासोज्जृम्भितायां हर्षचरिताख्यायिकायां प्रारम्भभागे त्रयोविंशतिपद्येषु शाब्दी विच्छित्तिरपूर्वैव नरीनृत्यति—

नमस्तुङ्गशिरश्चन्द्र-बिम्बचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे॥

इति मङ्गलपद्येऽपि वाण-नर्तिताश्शब्दा अपूर्व सौन्दर्यमुद्गिरन्ति। बाणसमये तु गद्याङ्कनक्षेत्रे विविधानि वर्त्मानि दृग्गोचराण्यासन्। औदीच्येषु श्लेष-संश्लिष्टपदावलीं, वारुणीं दिशमञ्चत्सु अर्थ-कौटिल्यम्, दाक्षिणात्येषु उत्प्रेक्षाप्रेक्षा, पौरस्त्येषु (गौडेषु वा) अक्षर-विकटाडम्बर एव काव्योत्कर्षहेतवो गुणगणा आसन्निति हर्षचरिते सङ्केतितम्—

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**श्लेषप्रायमुदीच्येषु, प्रतीच्येष्वर्थमात्रकम्।**
**उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षर-डम्बरः॥** (हर्षचरिते १.८)

बाणस्तु निरुक्त-गुणचतुष्टयमेव काव्योत्कर्षकं मन्यते। एकत्रैव काव्ये (गद्यकाव्ये विशेषतः) अर्थ-नावीन्यम्, अग्राम्या स्वभावोक्तिः, अक्लिष्टः (सौकुमार्यवाही) श्लेष-प्रयोगः, प्रतीयमानो रसोद्रेकः, विकटाक्षरडम्बरश्चेति समेऽपि गुणा दुर्लभा भवन्ति, किन्तु बाणकृतासु गद्यावलीषु त इमे दुरासदा अपि गुणाः पदे पदे लभ्यन्त एवेति बाण-वाणीरहस्यं समास्वाद्यताम्—

**नवोऽर्थो, जातिरग्राम्या, श्लेषोऽक्लिष्टः, स्फुटो रसः।**
**विकटाक्षर-बन्धश्च, सममेकत्र दुर्लभम्॥**

बाणगद्य-मूल्याङ्कन-प्रसङ्गे ते इमे पञ्चगुणाः पञ्च-बाणस्य पञ्च बाणा इव प्राप्तोकर्ष-वैभवा इति निश्चप्रचम्।

बाणमते तु आख्यायिका कनकाञ्चितसोपानमार्गा शय्येव बाभातितराम्। 'कथा'-गद्यभिदाऽपि स्फुरत्कलालाप-विलासकोमला प्रियतमशय्यां स्वयमभ्युपेता रसवती नव्य-वधूरिव कस्य सचेतसश्चेतो न हरते—

**स्फुरत्-कलालाप-विलासकोमला करोति रागं हृति कौतुकाधिकम्।**
**रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव॥**

हर्षचरितस्य प्रथमोच्छ्वासे कविकोमलकल्पना-प्रसूता सरस्वती-दधीचि-प्रणयगाथा कोमल-कान्त-पदावल्यामुपलालिता। सरस्वत्या विप्रयोगदशा-वैक्लव्यं कमनीयकला-कलितायां-शैल्यां निपीयताम्—

स्वप्रासादित-द्वितीयदर्शना च आकर्णाकृष्टकार्मुकेण मनसि निर्दयमताड्यत मकरकेतुना। प्रतिबुद्धाया मदनशर-ताडितायाश्च तस्या वार्तामिव उपलब्धुं रतिः आजगाम। तथा हि, ततः प्रभृति कुसुमधूलिधवलिता-भिर्वनलताभिः अताडिताऽपि वेदनामधत्त। मन्दमन्द-मारुतविधुतैः कुसुमरजोभिः अदूषितलोचनापि अश्रु-जलं मुमोच। हंसपक्षतालवृन्तचय-विधुतैः शोणशीकरैरसिक्तापि आर्द्रतामगात्। (हर्षचरिते, प्रथमोच्छ्वासे)

द्वितीयोच्छ्वासे ग्रीष्मर्तुचण्डातप-वर्णन-चण्डिमा, राजद्वारस्य च नैसर्गिक-कलालङ्कृता वर्णना च मनोरमायते। तृतीयोच्छ्वासे च बाणकृतं हर्षचरिताङ्कनसौरभं नूनमेव पद-शय्यासौन्दर्यमुन्मीलयति, स्थाण्वीश्वर-वर्णन-विन्यासोऽपि शाब्दीं क्रीडा-नैपुर्णी द्योतयितुमलम्—

तत्र-पद्मासनस्थित-ब्रह्मर्षिध्यानाधीयमान-सकलकला-कुशलप्रशमः प्रथमोऽवतार इव ब्रह्मलोकस्य, कलकल-मुखर-महावाहिनी-शत-सङ्कुलो विक्षेप इव उत्तरकुरूणाम्, ईश्वरमार्गसन्तापानभिज्ञ-सकलजनो विजिगीषुरिव त्रिपुरस्य, सुधारससिक्तधवलगृह-पङ्क्ति-पाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य, मधुमत्तमत्तकाशिनी

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

भूषणरव-भरितभुवनो नामाभिहार इव कुवेरनगरस्य स्थाण्वीश्वराख्यो जन-विशेषः। (हर्षचरिते, तृतीयोच्छ्वासे)

सप्तमोच्छ्वासे च गौडाधिपति-मद-मर्दनोत्कण्ठितेन हर्षेण प्रेरितस्य चञ्चच्चमूचमत्कारस्य चारुचित्रणं चित्ततल-चमत्कारचयमातनोति। असमस्तोऽपि समस्तोल्लासकारी गद्यखण्डोऽयम्—

''अथ प्रस्थिते राजनि कलकलत्रस्त-दिङ्नागसूत्काररव इव इतस्ततस्तस्तार तारतरस्तूर्य्याणां प्रतिध्वनिराशापटलेषु। दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्तुतानां करिणां मद-प्रस्रवणवीथीभिः अलिकुल-कालीभिः कालिन्दी-वेणिका-सहस्राणीव सस्यन्दिरे। सिन्दूररेणु-राशिभिः अरुणायमान-बिम्बे रवौ अस्तमयसमयं शशङ्किरे शकुनयः। करिणां षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैः तिरोदधिरे दुन्दुभिध्वनयः। अश्वीयश्वास-निक्षिप्तैः शिशिवन्दे सिन्धुवारदाम-ंशुचिभिः निरन्तरम् अन्तरिक्षं फेनपिण्डैः। पिण्डीभूततगरस्तवक-पाण्डुराणि पपुरिव परस्पर-संघट्ट-नष्टाष्टदिशं दिवसम् उच्चचामीकरदण्डानि आतपत्र-वनानि।''

कादम्बरीनाम्नी कथाख्या गद्यकृतिस्तु हर्षचरितवद् अपूर्णैव पूर्वार्धभागमेव बिभ्रती चकास्ति। उत्तरार्धभागरचना तु बाणपुत्रेण भूषणेन पुलिन्दापरपर्यायेण पूर्णतां प्रापिता पूर्वार्धभाग इव उत्तरार्धभागे नास्ति तादृशी मनोहरण-वैदग्धी, तथापि क्वचित् क्वचिद् बाणगुम्फितेव कमनीयपदावली उत्तरार्धमलङ्करोत्येव—

''स तु मामुपसृत्यान्यदृष्टिरदृष्टिरदृष्टपूर्वोऽपि प्रत्यभिजानन्निव, असंस्तुतोऽपि चिरपरिचित इव, असम्भावितोऽप्युपारुढ-प्रौढप्रणय इव, अस्निग्धोऽपि परवानिव.........अनिमेषेण निश्चल-स्तब्ध-पक्ष्मणाऽन्तर्बाष्पपूरार्द्रेण कर्णान्तलम्बिना विकसितेनेवामुकुलिततारकेण चक्षुषा मत्त इवाविष्ट इव, विमुक्त इव, पिबन्निवाकर्षन्निवान्तर्विशन्निव च सुचिरमालोक्याब्रवीत्।'' (कादम्बरी, उत्तरभागः)

मानव इव प्रस्फुटं व्याहरन् शुकः सर्वशास्त्रविशारदतया वर्णितः, त्रिकालज्ञो महात्मा जाबालिः, जाबालितनयस्सविनयो हारीतः, मर्त्यलोकदविष्ठे हिमाचलाङ्के निवसन्तः किन्नराः, गन्धर्वनिकराः, अप्सरसः, शापवशंवदीभूता आकृतिपरिवर्तकाः पुण्डरीकादयः, पुनर्जन्मावधारणा, पुनर्जन्म-संस्मरण-कथा इत्यादयो वृत्तान्तभागाः वाणकल्पना-प्रसूतया तूलिकया चारु चित्रिताः।

बाणेन विदग्धया कलया कादम्बरीचरितवर्णने नूतना चेतना सम्भृता। स्वामिभक्तस्तु प्रतिभासम्पन्नः शुकनासः सन्मित्रं प्रणयिनी महाश्वेताऽपि वाणप्रतिभातूलिकया स्फुरत्पदैश्चित्रितौ। नायक-नायिका-चरित्रचित्रणे, प्राकृतिकबिम्ब-प्रतिबिम्बने, काव्यमय-स्वरूप-निरूपणे च वाण-शब्द-बाणास्तीक्ष्णतां प्रपद्यन्ते। मानव-जीवनोपयोगि कोमल-प्रणयाचित्रणं नाम बाणस्य सफल-गद्यकला-कौशलमभिव्यनक्ति। नायकान्तर्धानेऽपि स्थेयसीं धैर्य्यसम्पत्तिं दधाने कादम्बरी-महाश्वेते करुणरस-निरर्गल-तरङ्गिण्यौ इव वर्णिते वाणेन।

राजकुमारं चन्द्रापीडं प्राथम्येन दृष्टवती कादम्बरी तदन्तर्भावनासंभावन-विदग्धेन वाणेन प्रणय-रागोद्बोधनक्षमया शैल्या चित्रिताः—

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

''अथ तस्याः कुसुमायुध एव स्वेदमजनयत्, ससम्भ्रमोत्थानश्रमो व्यपदेशोऽभवत्। उरुकम्प एव गतिं रुरोध, नूपुर-रवाकृष्टहंसमण्डलमपयशो लेभे। निःश्वास-प्रवृत्तिरेवांशुकं चलं चकार, चामरानिलो निमित्ततां ययौ। अन्तःप्रविष्टचन्द्रापीडस्पर्शलोभेनेव निपपात हृदये हस्तः, स एव करः स्तनावरण-व्याजो बभूव। आनन्द एवाश्रुजलमपातयत्, चलित-कर्णावतंस-कुसुमरजो व्याज आसीत्।..........तदा च कादम्बरीं विशतो मन्मथस्यापि मन्मथ इवासीद् द्वितीयः, तया सह यो विवेश चन्द्रापीडहृदयम्। तथाहि असावपि तस्या रत्नाभरणद्युतिमपि तिरोधानममंस्त, हृदयप्रवेशमपि परिग्रहमगणयत्, भूषणरवमपि सम्भाषणममन्यत, सर्वेन्द्रियाहरणमपि प्रसाद-मचिन्तयत्, देहप्रभासम्पर्कमपि सूरतसमागमसुखमकल्पयत्।''

अहो! विचित्रैव रूपकोत्प्रेक्षामयी शाब्दी विच्छित्तिः। मन्मथ-मनोमथनकलया प्रथमतया परिचिताया मुग्धाया नायिकायाः सलज्ज-सस्पृह-भावनानामपह्नुतिमयी वर्णना नूनमेव वाणस्य तीक्ष्णपर्यवेक्षणशक्तिं प्रद्योतयति। अत्र चन्द्रापीडस्यौत्सुक्यं कादम्बरीप्रथमदर्शनजन्यानन्दनिःस्यन्दनं चालङ्कृतमपि सहृदयहृदयान्युद्घाटयति। अत्रार्थालङ्कारयोजना नालङ्कार-वैचित्र्यायैव प्रभवति, अपितु भावपक्षोपस्कारका अर्थालङ्कारा विभान्ति। महाश्वेतापुण्डरीकयोः प्रथमदर्शनक्षणेऽपि विलक्षण एव प्रणयपरीवाहो लक्ष्यते—

''उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः, पुरस्तादाकृष्यमाणेव हृदयेन, पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना, कथमपि मुक्तप्रयत्नमात्मानमधारयम्।'' (कादम्बरी-पूर्वभागे)

महाश्वेता-विलापे कादम्बरी-विरहवर्णने च विप्रलम्भ-शृङ्गारस्य मार्मिकी व्यञ्जना बाणप्रतिभासूच्या सूचिता। जरद्द्रविडधार्मिक-वर्णने हास्यरसोद्रेकः प्राप्यते। स्त्रीणां कापिक-मानसिक-भावसंव्यूहने बाणतूलिका विलक्षणां वैदग्धीं बिभर्ति। चण्डालकन्यायाः, शूद्रकं स्नपयन्तीनां वारांगनानां, महाराज्ञ्या विलासवत्याः, ताम्बूलकरङ्कवाहिन्याः पत्रलेखायाः, तपःपूतायाः कर्पूरपूरश्वेतायाः महाश्वेतायाः, गन्धर्वराजतनयायाः सविनयायाः कादम्बर्याश्च सर्वाङ्ग-सर्वमनोभावचित्रणे च वाणस्य भावना कल्पना च राजोचितामुदात्तां गतिमभ्युपैति। अजस्रा शब्दसम्पद्, भावानुगामिनी अलङ्कारसन्ततिः, अग्राम्या स्वभावोक्ति-वल्लरी, प्रसङ्गोपेतोरसनिःस्पन्दश्च यथाकामं यथाकालञ्च बाणप्रतिभां सेवन्ते दासा इव स्वयमनायासेन अनाहूता अपि। श्यामाङ्गी भीषणा चाण्डालकन्यापि सहृदय-हृदयपटलप्रभावोत्पादिन्येव वर्णिता बाणेन। त्रैलोक्यलभ्यानि कृष्णतोपमानानि चाण्डालकन्याया उपमेयभूताया अलङ्करणार्थं सुसज्जीकृतानि महाकविना। एवमेव महाश्वेताया धावल्य-संसाधनाय जागतिकगौर-पदार्थ-सार्था एकत्रैवोपस्थापिता बाणप्रतिभातूलिकया। साकारां महाश्वेतां चाण्डाल-कन्याञ्च मण्डयितुं निराकारा अपि उपकरण-व्यूहाः स्वयमुपतिष्ठन्ति।

मूर्च्छामिव मनोहारिणीम् आलेख्यगतामिव दर्शनमात्रफलाम्, पावकेनेव भगवता रूप एव पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहाम्, रचितकिरातवेषामिव भवानीं, प्रभाश्याम-श्यामलितामिव श्रियं, महिषसुरसधिररक्तचरणामिव कात्यायनीं चाण्डालकन्यां वर्णयन् बाणो नूनमेव कल्पनाकल्पतरुः शब्दसम्राडिव च दृश्यते—

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**अनङ्गवारण-शिरोनक्षत्रमालायमानेन रोमराजिलतालवालकेन रशनादाम्ना परिवृतजघनां— शरदमिव विकसित - पुण्डरीकलोचनां, प्रावृषमिव घनकेशजालाम्, मलयमेखलामिव चन्दपल्लवावतंसा, नक्षत्रमालामिव चित्रश्रवणाभरणभूषिताम्।** (कादम्बरीपूर्वभागे)

महाश्वेतामपि कलियुगध्वस्तधर्मशोकगृहीतवनवासां, त्रयीमिव देहवतीमिव मुनिजनध्यानसम्पदम्, धर्महृदयादिव विनिर्गतां, शंखादिवोत्कीर्णां, मुक्ताफलादिवाकृष्टां, मृणालैरिव विरचितावयवां, इन्दुकरकूर्चकैरि-वाक्षालितां, रजतद्रवेणेव निर्मृष्टाम्, इयत्तामिव धवलिम्नो रूपयन् वाणः कामपीयत्तां कल्पनाकामनीयकस्य शव्दाडम्बरस्य च संस्रष्टुमीहते।

न केवलं नारी-वर्णन एव पुरुषवर्णनेऽपि लब्धप्रसरप्राग्भारा वाणसरस्वती। महाराजयोः शूद्रकचन्द्रापीडयोः तापसयोर्जाबालि-हारितयोः, तपःपूतयोः पुण्डरीक-कपिञ्जलयोः, शबरसेनापतेर्मातङ्गस्य, जरद्द्रविडधार्मिकस्य च तत्तद्-वैचित्र्यानुकूल-वर्णनानि बाणलेखन्या आकूतसम्पदं बिभ्राणा दृश्यन्ते। चित्रकार इव बाणः सर्वतः प्राग् जातिं समाश्रित्य वर्ण्यं रेखाङ्कनमानयति, ततश्चोपमया, उत्प्रेक्षया, अपह्नुत्या, रूपकेण वर्ण्य-वर्णन-रेखा रञ्जयति, अन्ते च रजिञ्जतवर्णनानि बाणस्य भावनां वर्ण्यस्य प्रकृतिञ्च सममेव मनोविज्ञानदृशा सूचयन्ति। बाणः शूद्रकस्य जितेन्द्रियत्वमित्थं पोषयति—

**''तस्य च.......सुरतसुखस्योपरि द्वेष इवासीत् सत्यपि रूपविलासोपहसित=रतिविभ्रमे लावण्यवति.....हृदयहारिणि चावरोधजने।''**

परिसङ्ख्यालङ्कारमाध्यमेन बाणः पण्डितपटलीं शाब्दीं क्रीडास्थलीं सम्प्रापयति-

**''यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराः,..... छत्रेषु कनकदण्डाः,..... न प्रजानामासन्। यस्य च.........अन्तःपुरिकाकुन्तलेषु भङ्गः,........नूपुरेषु मुखरता........अभूत्।''**

हारीत-जाबालिवर्णनेऽपि विरोधाभास-भासिता शाब्दी क्रीडा निपीयताम्—

''सुप्तोऽपि प्रबुद्धः'' इत्यादि।

जाबाल्याश्रमवर्णनेऽपि श्लेषगर्भिता परिसंख्या संख्यावतां मनोहारिणी—

**यत्र च मलिनता हविर्धूमेषु न चरितेषु, मेखलाबन्धोव्रतेषु नेर्ष्याकलहेषु,**
**स्तनस्पर्शो होमधेनुषु न कामिनीषु। यत्र च महाभारते शकुनिवधः पुराणे।**

वायु-प्रलपितम्, वयःपरिणामेन द्विजपतनम्.....एणकानां गीतश्रवणव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः। (कादम्बरी-पूर्वभागे)

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अच्छोदसरोवरस्य रमणीयतां भीषणताञ्च चित्रयन्तो बाणस्य शब्दराशयोऽर्थालङ्कारसरणिमाश्रयन्ते। विन्ध्याटवीवर्णनमपि विरोधाभासेन विकचीकरोति बाणः —

**''क्रूरसत्त्वापि मुनिजनसेविता, पुष्पवत्यपि पवित्रा।''**

सूर्योदय-सूर्यास्त-चन्द्रोदयादि-प्रकृतिचित्रणेषु वाण-लेखनी कामप्यपूर्वामेव नैपूर्णी बरीभर्ति। सन्ध्या सन्ध्येया—

''क्वापि विहृत्य लोहिततारका तपोवनधेनुरिव, कपिला परिवर्तमाना सन्ध्या तपोधनैरदृश्यत। अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलु-धारिणी हंसपतिदुकूलपरिधाना मृणालधवलयज्ञोप-वीतिनी, मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत्।.........क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः सन्ध्यारागः।'' (कादम्बरी-पूर्वभागः)।

उपमोत्प्रेक्षा-स्वभावोक्ति-रूपकश्लेषचित्रिमिदं वर्णनं बाणस्य शब्दसम्पत्तिमयीं कल्पनाशक्तिमुन्मील-यति। आश्रमवर्णने चाश्रमसुलभान्येवाप्रस्तुतानि प्रस्तुतीकृताति। तपोवनधेन्वा चोपमीयमाना सन्ध्या कालिदासनिरूपितां नन्दिनीं दृक्पथमानयति—

**सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥** (रघुवंशे द्वितीय-सर्गे)

दिनपतिसमागमनार्थं व्रतमाचरन्ती कमलिनी च पतिसङ्गमनार्थं तपश्चरन्तीं कादम्बरीं महाश्वेतां च वक्ष्यमाणां सूचयन्तीव नाटकीयं पताकास्थानकमिव समुज्जृम्भयति। किं बहुनानल्पजल्पनकल्पनेन ? वस्तुतस्तु बाणः कमनीयानल्पनाकल्पशाखी, विचित्रश्च शाब्दीं क्रीडां विधित्सुर्महाकविः, गद्यपद्योभयविधपा-ण्डित्यप्रवणश्चेत्यत्र नास्ति कश्चनापि संशयलेशावकाश-प्रकाशः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# सृष्टि-विज्ञान-परिशीलनम्

**डॉ. विनोदानन्दझा**

कृषिप्रधानेऽस्मिन् भारतवर्षे आवेदात् उपनिषत्पर्यतं कृषिवर्णनं परिलक्ष्यते। अस्माकं देशस्य सम्पूर्णः वाङ्मय आदौ चतुर्षु वेदेषु मध्ये रामायणे अन्ते च महाभारते सुशोभते। भारतीयराष्ट्रगीतं ''शस्यश्यामलां मातरम्[१]'' स्तुवन्ति सर्वे। ''माता भूमिः पुत्रोऽहं पृथिव्याः''[२] आर्षवचनात् ''कलावन्नगतः प्राणाः[३] पुराणवचनात् त्वययायत्तं कृषिफलमिति''[४] कालिदास-काव्यवचनाच्चेति कृषिप्रधानत्वेन वर्णिताः सन्ति। ''पर्जन्यादन्न संभवः''[५] भगवता श्रीकृष्णेनोद्भासितं वचनं सर्वथा चिन्तनीयम्। वृष्टिः वशादेव कृषिफलीभूतः भवति कारणादस्मात् वृष्टिवशादेव परिशीलनं परमावश्यकं भवति। कृषिराधारिता अर्थनीतिरेव प्राणिनां प्राणवन्तः सार्थकतां प्रकटयति। कथितञ्च वृष्टेः महत्वं प्रति-

**वृष्टिमूला कृषिः सर्वा वृष्टिमूलञ्च जीवनम्।[६]**
**तस्मादादौ प्रयत्नेन वृष्टिज्ञानं समाचरेत्॥**

अतः पराशरस्य वचनं सर्वतोभावेन ग्राह्यं परिशीलनञ्चेति। पुरा भारतवर्षे कृषिपद्धतिः सुविकसिता व्यवस्थिता च आसीत्। यथा वराहमिहिरस्य वचनं परिलक्ष्यते-

**दैवविद्विहित चितततो द्युनिशंयो गर्भ लक्षणे भवति।[७]**
**तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्देशे॥**

कर्षणेन संबद्धा व्याहृतयोः मुख्यतः ऋग्वेदसंहितायां परिलक्ष्यते यथा-

---

१. राष्ट्रीयगीतम्
२. आर्षवचनम्
३. मारकण्डेयपुराणान्तर्गतसत्यनारायणकथा पृ. २
४. उत्तरमेघदूते
५. गीतायां, अध्याय ३, श्लोकः १४
६. कृषिपद्धतिः पृ. १, श्लोकः १०
७. वृहत्संहिता गर्भलक्षणाध्यायः श्लोकः ३१



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**यवं वृकेनाश्विना वपन्तेषं दुहन्ता मनुषायदस्रा।**
**अभिदस्युं वकुरेणाधमन्तोरू ज्योतिश्चक्रशुरार्याय ॥[१]**

परिवर्त्तनीयासु संहितासु ब्राह्मणेषु च असकृदुल्लिख्यते कृषिः अथर्वेदसंहितायां (२.४.५) तैत्तरीय-संहितायां (७.१.११.१) मैत्रायणीसंहितायां (१.२.२) वाजसनेयीसंहितायां (४.१०.९.२२) शतपथब्राह्मणे (७.२.२.७) तथा तैत्तरीयब्राह्मणे (३.१.२५) च वैदिककाले कर्षणीया भूमिरूर्वरात्वेन क्षेत्रत्वेन वा संकीर्त्यते स्म।

वर्षा सापेक्षा कृषिः भवति। भारतभूमि देवमातृकाः प्राधान्यतः भारतस्य कृषिप्राधान्येन वृष्टेरपेक्षणाद् वर्षान्ता संज्ञा सा। ऋग्वेदसंहितायां जलवर्षको देवेन्द्रः आदित्यादभिन्न एव। इन्द्र वृष्टये मुहुर्मुहुः प्रार्थ्यते। अत्र अर्चनीयत्वादेव अर्कपदमिन्द्रार्थकं भजते (ऋ-१.१०.१) यथा-

**केतु कृण्वन्न केतवे पेशोमर्याअपेशसे।[२]**
**समुषद्भिरजायथाः ॥**

अत्र इन्द्रस्य परमेश्वर्यम् अग्निवाय्वादित्यनक्षत्ररूपतया विराजते। ब्रीह्यादिनिष्पत्त्यर्थं वृष्टिदायको इन्द्रः मेघस्योद्घाटनाय प्रार्थ्यते यथा-

**संनोवृषन्नमुं चरू सत्रादावन्नपावृधि।[३]**
**दिवोवृष्टिं च्यावयति।**

स्वर्लोकयुक्तानाम् अपा वर्षणायेन्द्रः स्तूयते। वृष्टिप्रदानात् अन्नसम्पत्तेरूर्ध्वं क्षीरादिरसप्रदानां गवां अपि प्रदानाय प्रार्थ्यते यथा-

**न हित्वा रोदसी उभे ऋधायमाणमिन्वतः।[४]**
**जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥**

आदित्याज्जायते वृष्टिः इति मनुवचनं (३-७६)

**अपांनपातमवसे सवितारमुपस्तुहि। तस्य व्रतान्युश्मसि।[५]**

---

१. ऋग्वेदसंहितायाम् १.११७.२१
२. ऋग्वेदसंहितायाम् १.६.३
३. ऋग्वेदसंहितायाम् १.७.६
४. ऋग्वेदसंहितायाम् १.१०.८
५. ऋग्वेदसंहितायाम् १.२२.६

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अग्र्यादित्यावपां कारणतया संबन्धिनी अग्नेराप: इति तैत्तरीय आरण्यके (८.२) परिलक्ष्यते।

वृष्टिविज्ञानस्य विभिन्नशाखानां सूत्रभूतो निर्देश: कौटील्यअर्थशास्त्रे वृष्टिदृष्ट्या शोभन-संवत्सरस्य ज्ञापकानां वर्णनप्रसंगे समुपलभ्यते यथा-

तस्योपलब्धिर्बृहस्पते: स्थान-गमन-गर्भाधानेभ्य: शुक्रोदयास्तमयचारेभ्य: सूर्यस्य प्रकृतिवैकृताच्च[१] शास्त्रस्यास्य एकस्या: शाखाया: सूत्रभूतो निर्देशो पुराणेऽपि दृश्यते। यथा-

सूर्य-ग्रस्तञ्च नीरञ्च काले तस्मान् समुद्भव:।[२]
सूर्योमेघादय: सर्वे विधात्रा ते निरूपिता:॥

वृष्ट्यादि सूचकानां नृप-शस्याधिप-मंत्रि-जलाढकप्रभृतीनां क्रमानुवर्तनस्यापि विधातृनिरूपितत्त्व-वर्णनात्, सम्वत्सरक्रमाश्रितो वृष्टिज्ञानविधिनिर्दिष्टो भवति।

अवसरेऽस्मिन् संवत्सरक्रमाश्रितेन विधिना ज्ञातं भावीवत्सरीय वृष्ट्यादिफलमपि सूच्यते। वृष्टि-विज्ञानस्य महत्वम् उपयोगिताया अनुशीलनात्पूर्वं वृष्टिशब्दस्य विवेचनमावश्यकं वर्त्तते। अस्तु ''वृष्टिसेचने'' इत्यस्मात् धातो: स्त्रियां ''क्तिन्'' इति क्तिन् प्रत्यये कृते वर्षणार्थे वृष्टिशब्दो निष्पद्यते। वर्षणं तुषारहिमकरकादीनां बहुविधं भवति, किन्तु सामान्यत: वृष्टिशब्दो जलवृष्टिं सूचयति। इदमेव जलवाष्पं वायुना नीतम् उच्चैराकाश-मुपेत्य शीतसम्पर्कात् पुन: जलकणेषु परिणमति। यदा गुरूतरा जायते, वायुना वोढुं न शक्यन्ते तदा भूमौ निपतन्ति। अनेन प्रकारेण जलवृष्टिर्भवति। वाचस्पत्यकोषे निर्गतं रादग्रे नीरम्। अथवा रोऽग्रिर्यस्मात् तन्नीरमिति।

सांख्यानाम्मते जलं रसतन्मात्रादुत्पन्नो भूतिविशेष:। नैयायिकास्तु परमाणुविशेषेभ्य एव जलस्योत्पत्ति: कथयन्ति। वेदान्तिनाम्मते पञ्चीकृतेभ्य: पञ्चमहाभूतेभ्य: स्थूलतया उत्पन्नं जलं भौतिक-विवेचनदृष्ट्या ''अग्नेराप'' इत्युपनिषद् वचनं सर्वतोभावेन वैज्ञानिकं वर्त्तते।

जलस्योत्पत्तिविषये प्राच्यानां भारतीयानाम्, आधुनिकानां पाश्चात्यवैज्ञानिकानाञ्च मतं सर्वथा अभिन्नमेव।

वृष्टिविज्ञानस्य बहुविधोपयोगिता सुशोभिता। कृषिशिल्प-वाणिज्य-प्रभृतीनां व्यवसायानामत्यन्त-मुपकारं भजते। राजकीय-प्रशासन-कार्येषु विज्ञानस्यास्य विशिष्टं महत्वमस्ति। कृषिव्यवसायस्य महदुप-कारित्वात् कृषे: अपरिहार्यमङ्गमिति स्वीकुर्वन्ति विद्वांस:। अस्य ज्ञानविरहित: कृषक: कृषिकर्मणि कदापि

१. कौटील्य अर्थशास्त्रे, द्वितीयाधिकारणे सीताध्यक्षप्रकरणे।
२. ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे २१ तमाध्याये श्लोक १०५-१०६

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सफलो न भवति। वृष्टिविज्ञानाभावे कृतः परिश्रमोऽपि वृथात्वमेति वृष्ट्यादि ज्ञानाभावेऽनवसरे कृतं वाणिज्यमपि सफलत्वं न प्राप्नोति। समुद्रसन्निकटेषु वृष्टिबहुलक्षेत्रेषु मेघमारूतादीनामुत्पात-सूचनार्थं राजपथ-घटिकास्तम्भेषु वृष्टिसूचनाया अपि व्यवस्था कृता वर्त्तते। कृषिर्न केवलं जलाभावात् अपितु अनवसरे वर्षणादतिवर्षणादपि च विनश्यति। अतएव एतत्पूर्व सूचना परमावश्यकी वर्त्तते।

वृष्टिगर्भाधानवशादेव कालान्तरे वृष्टिर्भवति। अतएव वृष्टिगर्भाधानकालः कः इति विषये विचारं परमावश्यकं परिलक्ष्यते। यस्मिन् कस्मिन्नपि काले समुचिततापक्रममासाद्य गर्भाधानं वृष्टेः भवति किन्तु सामान्यतः चातुर्मास्ये वर्षर्तौ, मेघस्य गर्भाधानं कार्त्तिकशुक्लपक्षानन्तरं भवति। यथा सिद्धसेनः कथयति-

**शुक्लपक्षमतिक्रम्य कार्त्तिकस्य विचारयेत्।[१]**
**गर्भाणां संभवं सम्यक् सस्य सम्पत्तिकारणम्॥**

वृष्टिगर्भाधानकालस्य प्रमुखकालविषये गर्गस्य मतमेतादृशं वर्त्तते-

**शुक्लादौ मार्गशीर्षस्य पूर्वाषाढव्यवस्थिते।[२]**
**निशाकरे तु गर्भाणां तत्रादौ लक्षणं वदेत्॥**

''महर्षिणा गर्गेन मार्गशुक्ले चन्द्रे पूर्वाषाढनक्षत्रे सम्प्राप्ते सति वृष्टिगर्भाधानकालः कथितः एवमेव काश्यपादीनां मुनीनां मतान्यपि विद्यन्ते। एतत्प्रसंगे आधुनिकानां ऋतु वैज्ञानिकानामम्मतं विद्यते यत् शीतर्तौ वृष्टिगर्भकालः ग्रीष्मर्तौ वृष्टिगर्भपोषण कालः, वर्षर्तौ च प्रसवः कालः स्यात्। तेषाम्मतेन कार्त्तिकशुक्लतः माघं यावत् शीतकालोऽर्थात् वृष्टिगर्भाधानकालः, फाल्गुनशुक्लतः ज्येष्ठमासं यावत् कृष्णकालोऽर्थात् गर्भपोषणकालस्तथा आषाढशुक्लतः आश्विनमासं यावत् वर्षाकालस्तु वृष्टिप्रसवकालो वा स्वीकृतः। कथितञ्च एतद्विषये महामहोपाध्यायेन मधुसूदनदजी ओझामहाभागेन-

**कार्त्तिकात् फाल्गुनात् तद्वदाषाढात्प्रतिभाति तु।**
**शीतोष्णवर्षाकालानां चातुर्मास्यानि सम्प्रति॥**
**शीतकाले तु गर्भः स्यात् परिपाकस्तदुत्तरे।[३]**
**वर्षाकाले तु गर्भाणां प्रसूतिः क्रमतो भवेत्॥**

---

१. वृहत्संहितायाम् १५४ पृ.
२. वृहत्संहितायाम् १५५ पृ.
३. कादम्बिन्यां, गभोपक्रमकाले, श्लोके, १७-१८

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वृष्टिगर्भस्य विपाकावधिविषये इदमेव तथ्यं सुनिश्चितं वर्त्तते यत् चन्द्रः यन्नक्षत्रोपगते यस्य वृष्टिगर्भस्य धारणं भवति, पुनस्तत्रक्षत्रोपगते चन्द्रे १९५ सौरदिवसानन्तरं तस्य वृष्टिगर्भस्य प्रसवकालो भवति वृष्टिश्च भवत्येव। कथितं यथा-

यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत्सचन्द्रवशात्।[१]
पञ्चनवगते दिनशते तत्रैव प्रसवमायाति॥

सामान्यतः इदमेवार्थं ध्वनितं भवति यत् वृष्टिगर्भस्य विपाकावधिः सार्धषण्मासमितो भवति यत् शुक्लपक्षे धृतो वृष्टिगर्भः कृष्णपक्षे वर्षति, कृष्णपक्षे धृतो वृष्टिगर्भः शुक्लपक्षे वर्षति। दिवायां धृतो गर्भः निशि प्रसवमेति, निशायां धृतो वृष्टिगर्भः दिवायां वर्षति, प्रातः सन्ध्यायां धृतो गर्भः सायं सन्ध्यायां, सायं सन्ध्यायां धृतो गर्भः प्रातः सन्ध्यायां प्रसवमेति।

उक्तञ्च-

सितपक्षभवाः कृष्णे, शुक्ले कृष्णाद्युसम्भवा रात्रौ।[२]
नक्तं प्रभवाश्चाह्नि, सन्ध्याजाताश्च सन्ध्यायाम्॥

मूलस्योत्तरार्धे समागते सूर्ये सति गर्भाधारणकालः आर्द्रायां समागते सूर्ये प्रसवकालः बोध्यः। अयं चतुष्ट्यं यावद्बोधम् अर्थात् मूले सम्प्राप्ते सूर्ये सति ततो मासचतुष्टयं यावत्, वृष्टेः गर्भाधानकालः भवति। आर्द्रायां सम्प्राप्ते दिवाकरे सति ततो मासचतुष्टयं तावत् प्रसवकालः वर्षाकालो वा भवति। यथोक्तञ्च-

मूलोत्तरार्द्धगादर्कादार्द्रा गतादपि।[३]
आभ्यां विभागमिच्छन्ति गर्भप्रसवकालयोः॥

वृष्टिवैज्ञानिकेन महामहोपाध्यायेन श्रीमधुसूदन ओझामहाभागेन एवमेव भणितम्-

पौषे मूलाद्धरण्यन्तं चन्द्रचारेण गर्भति।
आर्द्रादिभेविशाखान्ते सूर्यचारेण वर्षति॥[४]

अर्थात् पौषे मासे मूलनक्षत्रादारभ्य भरणीनक्षत्रं यावत् चन्द्रः यदि तिष्ठति तदा वृष्टिगर्भधारणः भवति। त एव वृष्टिगर्भस्य प्रसवः आर्द्रादिविशाखायां समागते सूर्ये सति भवति। महर्षिणा गर्गेणैवं गर्भप्रसवकालौ

---

१. वृहत्संहितायां ग. ल. अ. श्लोक ७
२. वृहत्संहितायां ग. ल. अ. श्लोक ८
३. कादम्बिन्यां, गर्भोपक्रमकालाध्याये, श्लोके, २०
४. कादम्बिन्यां, द्वादशमासिकाध्याये पौषे, श्लोके १

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वर्णितौ सुस्पष्टेन-

दिवाभवति यो गर्भो रात्रौ स इति पच्यते।
शुक्लपक्षे समुद्भूतः कृष्णपक्षे च वर्षति॥
पौर्णमास्यामथोत्पन्नः सोऽमावस्यां प्रवर्षति।
अमावस्यां समुद्भूतः पूर्णमास्यां प्रवर्षति।
पूर्वसन्ध्यासमुद्भूतः पश्चिमायां प्रवर्षति।
पश्चिमायां समुद्भूतेः पूर्वसन्ध्यां प्रवर्षति॥[१]

एवं प्रकारेण कालविपर्यायसमुत्सृत्य तेषां-तेषां मासानां तेषु तेषु धृतानां वृष्टिगर्भाणां प्रसवकालो वराहमिहिरेण स्वकीयवृहत्संहिता-ग्रन्थस्य गर्भलक्षणाध्याये वर्णितः पराशरेणापि सम्यक् रूपेण वर्णितं विद्यते।

वृष्टिगर्भस्याधानचिह्नस्य ज्ञानमपि परमावश्यकं विद्यते। अस्य भूमण्डलस्य वायुमण्डले क्षेत्रविशेषत्वात् यदा वृष्टि-गर्भधारणः भवति तदा तस्य क्षेत्रस्य वायुमण्डले आकाशे च विविधचिह्नानि दृश्यन्ते। विविध-लक्षणैः तत्क्षेत्रवर्त्तिनो मनुष्याः पशुपक्षिणोऽपि प्रभाविताः भवन्ति। एतैः प्रभावलक्ष्यैः वृष्टिगर्भस्य ज्ञानं भवति। अस्मिन् विषये स्वनामधन्यः वराहमिहिरः स्वकीये वृहत्संहिताग्रन्थे एवं विचारः प्रकटितवान्। गर्भधारणकाले मेघस्य स्वरूपं मुक्तारजत इव श्वेतः, तमालवृक्ष सदृशः, नीलकमलमिव जलचरजन्तुसदृशः स्यात्तदा एतादृशि गर्भे बहुवृष्टियोगाः भवन्ति। यदि गर्भधारणकाले अतितीक्ष्णांशुः स्यात् सूर्यस्य तदा अति वृष्टियोगः भवति। गर्भधारणकाले उल्कापातः-दिग्दाहः-भूकम्पः-गन्धर्वनगरस्य दर्शनं, कीलकादिकेतूनां दर्शनं, निर्घातग्रहाणां युद्धः, ग्रहणस्य दर्शनं वा स्यात्तदा गर्भस्य नाशः भवति। अस्मिन् प्रसंगे पराशरस्य वचनमेवं विद्यते-''तेषां ग्रहाणामुदयास्तमयोल्कानिर्धाताशनिपातगन्धर्वनगरदिग्दाहार्करश्मिवर्णविकार-भूचलनप्रादुर्भावो वर्षास्ववर्षाय।[२]''

चैत्रे वायुः वातु, वृष्टि भवतु, श्वेताभश्च स्यात् तदा पुष्टो गर्भः भवति। पुष्टे वृष्टिगर्भे सति वृष्टियोगः बोध्यः।

कार्त्तिकसंक्रांतेः अन्ते दिवसद्वये अतिवृष्टिः स्यात्तदा वर्षतौं अतिवृष्टिर्जायते। तुलाराशेः संक्रान्तिदिवसे वृष्टिः स्यात्तदा सामान्यरूपेण शस्योत्पत्तिः भवति। पौषे मासे च सुभिक्षिता स्यात् कार्त्तिकशुक्लैकादशीद्वाद-श्योरन्यतरे दिवसे अभ्रान्वितः नभः स्यात्तदा आषाढे मासे अतिवृष्टियोगः भवति।

---

१. वृहत्संहितायां पृ. १५५
२. वृहत्संहितायां पृ १५९, पराशरवचनम्।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मार्गशीर्षपौषमाघमासेषु सूर्यचन्द्रौ हिमपतनात् मलिनौ ताम्रवर्णान्वितौ वा स्यात्तदा आषाढशुक्ल-सप्तमीतः दिनत्रयं यावद्वृष्टिः भवति। मार्गशुक्लद्वितीयातः एकादशदिवसंयावत् गर्भधारणकालः निगदितस्तेषु दिवसेषु यस्मिनृक्षे यत्र वृष्टिरभूत् तन्नक्षत्रे तत्रैवागते सूर्ये सति वृष्टिर्बोध्या।

उक्तश्चैतत्प्रसंगे-

**पौषेमासे पूर्णिमायां चन्द्रमा नैव दृश्यते।**
**उत्तरस्यां दक्षिणस्यां यदा विद्युत् प्रकाश्यते।**
**अभ्रच्छन्न नभो वापि जलयोगोऽयमुत्तमः।[१]**
**अमायां श्रावणे मासि महावृष्टिर्भविष्यति॥**

यदा माघशुक्लाष्टम्यां मेघान्वितो नभः सप्तम्याञ्च मेघरहितः स्यात्तदा आषाढे मासे अनावृष्टिः श्रावणे च वृष्टिमादिशेत्। माघशुक्लाष्टम्यां सूर्यः मेघैराच्छादितश्चन्द्रश्च निर्मलः स्यात्तदा दुर्भिक्षकारकाः भवन्ति यदि माघस्य संक्रान्तौ वासवः वर्षति तदा गावः क्षीरयुता वसुन्धरा च शस्ययुता भवति। उक्तञ्च-

**माघमासे तु संक्रान्तौ यदि वर्षति वासवः।[२]**
**बहुक्षीरयुता गावो बहुसस्या वसुंधरा॥**

यथा मातुः गर्भे शिशूनां विविधोपचारः स्वयमेव भवति तथैव वृष्टिगर्भस्य कृतेऽपि उपचारस्वरूप-गर्भपोषकानि नक्षत्राणि सन्ति। प्राच्यैर्ज्ञातं यत् पूर्वभाद्रपदोत्तरभाद्रपदपूर्वाषाढोत्तराषाढ-रोहिणीनक्षत्रेषु धृतो गर्भो उपघात रहितो भवति। यथा कथ्यते ग्रन्थान्तरे-

**भाद्रपदद्वयविश्वम्बु दैवपितामहेष्वथर्क्षेषु।[३]**
**सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति।**

यथा वृष्टिगर्भपोषकाणां सूचना प्राच्यैः दत्ता तथैव वृष्टिगर्भविघातकानां नक्षत्राणामपि सूचना प्राच्यैः दत्ता। प्राच्यमतेन शतभिषगाश्लेषाऽऽर्द्रा-स्वातिमघानक्षत्रेषु धृतो गर्भः विनश्यति। यथोक्तञ्च-

**शतभिषगाश्लेषाऽऽर्द्रा स्वातिमघासंयुतोऽशुभो गर्भः।[४]**
**पुष्णाति बहून् दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः॥**

---

१. कादम्बिन्यां, पृ. २७, श्लोक, ६५, ६६
२. कादम्बिन्यां, पृ. ३७, श्लोक १२४
३. वृहत्संहितायां ग. ल. अ.९ २४ तमे श्लोके ४ अत्रैव श्लोक २९
४. वृहत्संहितायां २४ तमे श्लोक ४-अत्रैव श्लोक २९

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अनेनैव गर्गमहाभागोऽपि स्वकीयमतेन वृष्टिगर्भोपघातकानि नक्षत्राणि निर्दिष्टानि सन्ति। आधानकाले वृष्टिगर्भस्य साफल्याय चिह्नानि वर्णितानि सन्ति। आधानकाले वृष्टिगर्भस्य विशिष्टलक्षणानां ज्ञानं परमावश्यकं वर्त्तते यतो हि धृतः गर्भः साफल्यं भजते न वेति विषये पवन–मेघ–गर्जन–विद्युत्–शीकरवर्षनादीनां पञ्चलक्षणानां दर्शनं वृष्टिगर्भस्य साफल्यं सूचयति। वृष्टिगर्भस्याधानकाले अत्यधिकावृष्टिः वृष्टिगर्भस्यासाफल्यं सूचयति। एतेषां लक्षणानां वर्णनं वराहमिहिरेण स्वकीये संहिताग्रन्थे एवं कृतम्–

पवन–सलिल–विद्युत्–गर्जिताभ्रान्वितोयः ।।[1]
स भवति बहुतोयः पञ्चरूपाभ्युपेतः ।।

अनेन प्रकारेण स्पष्टं परिलक्ष्यते गर्भस्यासाफल्यविषये आधानकाले गर्भोपघातचिह्नविषये वराहेणैवं कथितम्।

गर्भसमयेऽतिवृष्टिर्गर्भभावाय निर्निमित्तकृता ।[2]
द्रोणष्टांशेऽभ्यधिके वृष्टे गर्भः स्त्रुतोभवति ।।

एवमेव गर्गवचनं, समाससंहितावचनं, पराशरादिमुनीनां वचनं विद्यते। ''पर्जन्यादन्न संभवः'' गीता वचनात् जलधरः मेघः इति कोषवचनाच्चेदमेव स्पष्टं जायते यद् मेघस्य वर्णनम् आवश्यकं वर्त्तते।

धूमज्योतिः सलिलमरूतां सन्निपातः क्व मेघः ।[3]

धूमः वायुमण्डले विराजमानाः रजकणा एव। जलवाष्पसम्पर्कात् दृश्यते। ज्योतिः सूर्यकिरण–सन्तापः तेजो वा। सलिलं जलवाष्पस्य शीतसम्पर्कात् उद्भूतं जलम्। मरूतः मेघानां वाहको वायुरीति।

आधुनिकाः पाश्चात्यवैज्ञानिकाः मेघानामुन्नतावनति–स्थितिं चाधिकृत्य विविधप्रकाराः कथयन्ति। प्राच्या अपि वत्सरक्रमस्वरूपेण मेघानां विविधप्रकाराः कथयन्ति। पाश्चात्यपद्धतौ ल्यूकहावर्डमहोदयाः मेघाः चतुर्विधाः कथयन्ति ते च सन्ति–साइरस, कम्यूलस, स्ट्रास, निम्बशश्चेति प्राच्यपद्धतौ चत्वारो मेघाः यथा–

आवर्तश्चैव संवर्त्तः पुष्करो द्रोण एव च ।[4]
चत्वारो जलदा प्रोक्ता आवर्तादि यथाक्रमम् ।।

---

१. वृहत्संहितायां गर्भ लक्षणाध्याये श्लोक ३७
२. वृहत्संहितायां ग. ल. श्लोक ३४
३. पूर्वमेघ, श्लोक ६
४. कृषिपराशरे, पृ. ६ श्लोक २४

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

आवर्त्त, पुष्कर, संवर्त, द्रोणश्चेति चत्वारो मेघा क्रमानुसारेण जलदाः सन्ति। महाकविना कालिदासेनापि मेघप्रशंसा क्रमे निगदितम्। यथा--

**जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम्।**[१]

मेघवंशे पुष्करावर्त्तकौ मेघौ मेघकुलश्रेष्ठौ स्तः। मतान्तरे नव मेघा अपि वर्णिताः सन्ति। यथा—

**ततश्चावर्तसंवर्त्तपुष्करद्रोणकालकाः।**[२]
**नीलस्य् वरूणो वायुस्तमो मेघाः स्मृता नव॥**

मेघानां वर्णनक्षमताऽपि प्राच्यैर्वर्णिताः। तथाहि पराशरमतेन—

**एकदेशेन चावर्ते संवर्त्ते सर्वतो जलम्।**[३]
**पुष्करे दुष्करं वारि द्रोणे बहुजला मही॥**

एवं प्रकारेण वृष्टिविज्ञानपरिशीलनार्थे मेघानां विविधवर्णनं परिलक्ष्यते।

वृष्ट्यादेः पूर्वज्ञानं कृते वायुगतेः पर्यवेक्षणं परमावश्यकं वर्त्तते। वायुमण्डले विद्यमानस्य तापस्य प्रमुखं कारणं सूर्य एवेति। सर्वविदितं सुस्पष्टं यत् आकाशमण्डले सूर्यस्य गतिः सुनिश्चितं वर्त्तते। कारणादस्मात् भूमण्डलेन सह गतिः सुनिश्चितं वर्त्तते। कारणादस्मात् भूमण्डलेन सह सूर्यस्य सम्पर्कोऽपि सुनिश्चितमेव। अतएव सूर्यतापप्रेरिता वायुगतेः क्रमोऽपि सुनिश्चितमेव। भाविवत्सरीय वृष्टिज्ञानाय द्वादशमासानां वायुगतेरध्ययनम् अपेक्षितं परिलक्ष्यते। पौषमासादारभ्य गणनाक्रमः। सार्द्धद्वयमितः कालः पौषमासीयः कालो ज्ञेयः। एतस्य सार्द्धद्वयमितस्य कालस्य त्रिंशद्भागकृते सति अन्यतमः पञ्चदण्डात्मकः कालः प्रत्येकं पौषमासीयः कालो ज्ञेयः। एतस्य सार्द्धद्वयमितस्य कालस्य त्रिंशद्भागकृते सति अन्यतमः पञ्चदण्डात्मकः कालः प्रत्येकं पौषमासीयदिवसस्य प्रतिनिधित्वं करोति। अस्मिन् पञ्चदण्डात्मके काले सार्द्धदण्डद्वयात्मकः कालः पूर्वार्द्धभागः दिवायाः पश्चाद्भागश्च निशायाः प्रतिनिधित्वं समेषां मासानां रात्रिदिवसयोः प्रतिनिधिभूतः कालः भवति। उक्तकाल एव भाविवत्सरप्रतिनिधिभूतः कालः भवति। कालमिदमादाय वायुगतिपर्यवेक्षणात् वृष्टिज्ञानं भवति। अस्मिन् विषये एतादृशं वचनं कथितम्। यथा--

---

१. पूर्वमेघदूतम्, श्लोक ७
२. सम्वत्सरफलम्, पृ. १०
३. कृषिपरासरे, श्लोक २५

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सार्द्धदिनद्वयं मानं कृत्वा पौषादिना बुधः।[१]
गणयेन्मासिकीं वृष्टिमवृष्टिं वाऽनिलक्रमात्॥

सौम्यवारूणर्योवृष्टिरवृष्टिः पूर्वयाम्ययोः।
निर्वाते वृष्टिहानिः सङ्कुले सङ्कुलं जलम्॥

एकैकं पञ्चदण्डेन मासस्य दिवसो मतः।
पूर्वार्द्धे वासरीवृष्टिरुत्तरार्द्धे च नैशिकी॥

फाल्गुनमासीय वायुगतेः पर्यवेक्षणात् भाविवत्सरीयवृष्टिज्ञानं कथं भवतीति प्रस्तूयतेऽत्र। होलिका-दाहकाले कृषकाः होलिकादाहस्य ज्वालायाः गमनदिशमवलोक्य आगामिवत्सरस्य वृष्टि ज्ञानं कुर्वन्ति। हिन्दीभाषायां भड्डरोक्तिरूपेण प्रसिद्धा उक्तिर्यथा—

होनी झर कौ करौ विचार[२]। शुभ अरू अशुभ कहा फल सार॥
पच्छिम वायु वहै अति सुन्दर। समया निपजै सजल वसुन्धर॥
पूरब दिश की वहै जो वाय। कछु भीजे कछु कोरो जाय॥
दक्खिनवाय वहै वध-नाश। समया उपजै सनईघास॥
उत्तरवाम वहै दडवरिया। पिरथी अचूकपानी पड़िया॥
जोर झकोरे चारो वाय। दुःखड़ा परिया जीव जेराय॥
जौ पै भरो अकामे जाय। तौं पिरथी संग्राम कराय॥

चैत्रमासीय-वायु-गतिं वीक्ष्य भाविवृष्टिज्ञानं भवति। यथा प्राच्यग्रन्थेषु उपलभ्यते—

चैत्रस्य शुक्लपञ्चम्यामभ्रच्छन्नं यदा नभः।
निर्मला वा दिशः सर्वा दृश्यन्ते वायुना युता॥

द्वितीये दिवसे प्राप्ते चैत्रे वायुश्च सर्वतः।
तत्र मेघाः प्रदृश्यन्ते वृष्टिर्भाद्रपदे ध्रुवम्॥[३]

चैत्रशुक्लपञ्चम्यां रोहिणी, सप्तम्यामार्द्रा, नवम्यां पुष्य, पौर्णमास्याञ्च चित्रानक्षत्रं स्यात्तदा तस्मिन् वर्षे चातुर्मास्ये अर्थात् वर्षर्तौ उत्तमा वृष्टिर्भवति। चैत्रशुक्लदशम्यां तिथौ मघानक्षत्रे सम्प्राप्ते सति वर्षर्तौ वृष्टिः सुभिक्षञ्च भवति। चैत्रशुक्लत्रयोदश्यां मेघाच्छन्ने सति वृष्टिरहतिः बोध्यः। यदि चैत्रकृष्णद्वितीयायां

---

१. कृषिपराशरे, पृ. ८, ९ श्लोक ३०, ३२
२. घाघभड्डरी, पृ. १००, १०१ पद्य संख्या १६१।
३. गुरुसंहितायां, पृ. २१ श्लोक १६५, १६६।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सर्वदिक् वायुवाति नभः मेघरहितश्च स्यात्तदा भाद्रे मासे भूयसी वृष्टिर्भवति। चैत्रकृष्णदशम्यां एकादश्याञ्च निरभ्रः स्यात्तदा सुवृष्टिः।

अभ्रान्विते नभसि सति दुर्भिक्षं भवति। यदि चैत्रकृष्णत्रयोदश्यां शनौ मीनार्कसंक्रमणं स्यात्तदा तस्मिन् वर्षे अत्यल्पं शस्यं भवति। यथोक्तञ्च—

यदि चैत्रत्रयोदश्यां भवेन्मीनार्कसंक्रमः।
शनिवारोऽपि तत्र स्याद्वर्षेऽत्यल्प शस्यकम्॥[१]

वैशाखज्येष्ठयोः मासयोः वायुगतेः पर्यवेक्षणात् वृष्टि-ज्ञान-विषये वराहमिहिरस्योक्तिरेवं विद्यते धारणदिवसेषु वायुगतेः फलं कीदृशं भवति, अस्य विवेचनं एवं विद्यते। वैशाखज्येष्ठयोरन्यतरे मासे पूर्वावायुः यदि वाति तदा सुभिक्षं जायते। यदि दक्षिणावायुः वाति तदा क्षेमकरः, नैर्ऋत्यां वायुः प्रवहेत्तदा दुःखदायकः भवति। वारूण्यां दिशि वायौ सप्राप्ते सति दीव्यधान्यानि लभते जनः उत्तरस्यां दिशि वायौ सति शुभदायकः, ऐशान्यां दिशि वायौ सति सर्वविधकल्याणकारकः भवति। उक्तञ्च—

सुभिक्षं पूर्ववातेन जायते नात्र संशयः।
दक्षिणे तु क्षेमकरौ नैर्ऋत्यां दुःखदो भवेत्॥

वायव्यां दिव्यधान्यानि वायव्यां वायुखे भवेत्॥
उत्तरो शुभदे देवि ऐशान्यां सर्वसम्पदः॥[२]

आषाढशुक्ले रोहिणीयोगगते चन्द्रे मासार्द्धं प्रतिनिधित्वकालः ग्राह्यः। श्रावण-भाद्र-आश्विन-कार्त्तिकेति मासचतुष्टयात्मकं चातुर्मासीति वा ज्ञायते। वराहमिहिरेण स्वकीये संहिताग्रन्थे एतस्य वर्णनं सम्यक् रूपेण कृतम्। ऋषिपुत्रगर्ग्योर्मतं भट्टोत्पलेन स्वटीकायां कृतम्।

पराशर-नारद-गर्ग मते च आषाढपूर्णिमायां सूर्यास्त-कालिक-वायुगतेः पर्यवेक्षणात् वृष्टिज्ञानं प्राप्यते। यथा नारदेन—

आषाढमासस्य च पौर्णमास्यां सूर्यास्तकाले यदि वातिवायुः।
पूर्वस्तदाशस्ययुता च मेदिनी नन्दन्ति लोका जनदायिनो घनाः॥[३]

---

१. कादम्बिन्यां, पृ. ५० श्लोक २१२
२. मेघमाला, पृ. ४७, श्लोक १२, १३
३. मयूरचित्रके, पृ. ११, १२, श्लोक ७७

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

रूद्रयामलतन्त्रान्तर्गते ईश्वरपार्वतीसंवादरूपेण वर्णितः पाण्डुलिपिसंग्रहात् मेघमालानामकग्रन्थात् जायते। आषाढीपूर्णिमापर्यवेक्षणेषु वनमालामतमपि प्रशंसनीयं वर्त्तते। मैथिलविदुषा जीवनाथेन विरचितोऽयं ग्रन्थः। यथा कथितम् महाभागेन—

**शुचिवलक्षदलान्ततमीमुखे यदि वहत्यनिलो हरिदिग्भवः।**
**जलमलं सृजति क्षितिमण्डले बहुमुदं बहुधावसुधा मृतः॥**

**अनलकोणभवो यदि मारूतो वहति मन्दजवो रजनीमुखे।**
**वमति भस्म कृशानुशिखाकुला वदनतः परितोऽपि वसुन्धरा॥[१]**

विदुषां मतमेनं डाकोऽपि स्वकीये ग्रन्थे एवमेव समुद्घाटितवान्। तेषाम्मतमेतादृशं विद्यते—

**पश्चिम बहए तृणहि उपजावए, सम्पति प्रजा बहुत पूब पाबए।**
**उत्तर बहए धान्य बहु होई, ईशान अनावृष्ट कर सोई॥[२]**

प्राच्यैर्विद्वद्भिर्मनीषिभिश्च भाविनां वृष्ट्यादीनां ज्ञानाय वृक्षवनस्पत्यादीनां विविधानां चेष्टानां गम्भीर-मध्ययनं कृतम् श्रीमद्वराहमिहिरेण प्राच्यानाम्मतमाश्रित्य वत्सरीय वृष्टिसूचकानां पादपानां चेष्टा वर्णिताः। तथाहि-

**यस्मिन्काले स्निग्धनिश्छिद्रपत्राः सन्दृश्यन्ते वृक्षगुल्मा लताश्च।**
**तस्मिन्वृष्टिः शोभना सम्प्रदिष्टा रूक्षैश्छिद्रैल्पमम्भः प्रदिष्टम्॥[३]**

अर्थात् यस्मिन् काले वृक्षाणां लतास्तेषां पत्राणि स्निग्धछिद्ररहितानि च तस्मिन्काले शोभना वृष्टिः भविष्यति यदा च वृक्षाणां लतास्तेषां पत्राणि रूक्षञ्छिद्रसहितानि च दृश्यन्ते तदा अल्पवृष्टिः भविष्यति तेन मतेन। अस्मिन्प्रसंगे पराशरोऽपि वराहमतमनुमोदयति।

नारदमते वृष्टिसूचिका रासायनिकक्रिया-

**यदा जलं च विरसं............तदा स्याद् वृष्टिरुत्तमा।**
**लोहानामलंनिचयो विस्रगन्धो यदा भवेत्।**
**शुद्धाञ्जनाभा गिरयो तदा बहुजलप्रदा॥[४]**

---

१. वनमाला, पृ. १, श्लोक १२, १३
२. डाकवचनसंहितायां, श्लोक ६४
३. वृहत्संहितायां कुसुमलताध्याये, श्लोक १४
४. मयूरचित्रकम् पृ, १८

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वराहमिहिरमतेन वृष्टिसूचिका रासायनिकक्रिया-

**विरसमुदकं..........जलागमहेतवः लोहानां मल-निचयः सविस्त्रगन्धः।[१]**

श्रीमद् जीवनाथमते रासायनिकक्रिया एवं वर्णिताः सन्ति-

**दशदिशोविमला विरसं पयौ द्रवति वा लवणं किल यद्दिने।[२]**

घाघभड्डरीकृता रासायनिकक्रिया एवं विद्यते-

**बोले मोर महातुरी खाटी होय जु छाछ।**
**मेह मही पर परन को जानो काछे काछ।[३]**

इत्यापि वर्णनं वृष्टिज्ञानार्थ समुपलभ्यते।

पादपानां तात्कालिकपरिवर्त्तनेभ्यो वृष्टिज्ञानं लभ्यते यथा-

**लता च गगनोन्मुखी कलितपुष्पगर्भो यदा।**
**तदा भूवि समन्ततो ददाति वारिधारा धरा।।[४]**

अर्थात्-यदा वृक्षाणां लतागगनोन्मुखी पुष्पान्विता च स्यात्तदा समन्ततः भुवि वारिधाराऽन्विता भवति। पराशरवर्णिता पशुपक्षिकीटादीनां वृष्टिसूचकाश्चेष्टादि विषयवर्णनमेवं विद्यते-

**जलस्थो जलहस्तो वा निकटेऽथ जलस्य वा।**
**दृष्ट्वा पृच्छति वृष्ट्यर्थं वृष्टिः संजायतेऽचिरात्।।[५]**

नारदवर्णिताः पशुपक्षीकीटादीनां वृष्टिसूचिकाश्चेष्टा एवं विद्यते। यदा मार्जाराः भूमिं नरवैः कर्षन्ति, मण्डूकाः शब्दं कुर्वन्ति, सर्पावृक्षोपरि यान्ति, कृकलासाः गावश्च सूर्यं पश्यन्ति तदा बहुजलप्रदाः मेघाः भवन्ति। उक्तञ्च-

**नखैर्लिखन्ति मार्जाराः पृथिवीं यत्तदा भृशम्।**
**शब्दं कुर्वन्ति मण्डूकास्तदा स्यात् वृष्टिरुत्तमा।।**

---

१. वृहत्संहितायां सद्योवर्षणाध्याये श्लोक, ४-६
२. वनमाला, अध्याय २, पृ. २
३. घाघमड्डुरी उक्ति, पृ ८४
४. वनमाला स. भ. पु. पाण्डुलिपि-संख्या ३५३९५, पृ. २
५. कृषिपराशरे, श्लोक ६५

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**सर्पावृक्षं यदा यान्ति तदा बहुजलप्रदाः।**
**गावः सूर्यं निरीक्षन्ति कृकलास गणास्तथा॥**[१]

श्रीमद्वराहोऽप्येवमेव समर्थयति। तेषां कथनं ईदृशं विद्यते-

**पवनविगमः पोप्लूयन्ते झषास्थलगामिनी।**
**रसनभसकृन्मण्डूकानां-जलागमहेतवः॥**[२]

श्रीमद् जीवनाथ-महाभागेन कथितं यत् यदि वायु न वाति, सूर्यांशः तीक्ष्णः मीनाः बलिं प्राप्रोति, मण्डूकाः कोलाहलं कुर्वन्ति तदा पयोद्गमः बोध्यः। यतोहि-

**न वाति यदि मारूतो रविरुदेति चण्डद्युतिः।**
**द्रुतं भुवि ऋषावलिर्व्रजति रन्तुमम्भस्तटान्॥**
**तदेव जलमागतं पयसि भेषकोलाहलो।**
**वदेदिह समन्त बुधवरः पयोदागमे॥**[३]

एतदतिरिक्तं काकनिलयस्य स्थितिं दृष्ट्वा वृष्ट्यादेः पूर्व-ज्ञानम्, गर्भकृतानि काकनिलयविषकानि पर्यवेक्षणानि काकस्याण्डसंख्यातो वृष्टेः पूर्वानुमानम् भवति, सूर्यचन्द्रयोः प्रकृति-वैकृतात् वृष्ट्यादेर्ज्ञानम्, सूर्यचन्द्रयोः प्रकृति-विकृतीनां निरीक्षणस्य प्रमुखः कालः चन्द्रस्य प्रकृतिविकृतिवशान् वृष्ट्यादेः ज्ञानञ्च वृष्टि-विज्ञान-परिशीलने परमावश्यकं भवति।

प्राच्य-भारते वृष्टिज्ञानाय केचन यान्त्रिकविधयोऽपि प्रचलिता अभवन्। कालविशेषे वायुमण्डलस्य तापक्रमं आर्द्रता वा अधीत्य भाविनो वत्सरस्य वृष्टिकालस्य वा वृष्ट्यादेर्ज्ञानं सुतरां भवति।

वृष्टिज्ञानाय पराशरस्य नदीजलतलाङ्कनविधिः, वृष्टिज्ञानाय गर्गोक्तः कुम्भप्रयोगविधिः, वृष्टिज्ञानाय च वराहमिहिरस्य तुलाप्रयोगविधिश्चेति त्रयाणां विधीनां वर्णनं परमावश्यकं परिलक्ष्यते। पराशरोक्त-नदीजलतलाङ्कनविधि :- नदीजलतलाङ्कनप्रयोगं तत्रैव कर्त्तुं शक्यते यत्र नदी समासन्ना भवति। वैशाखमासीय प्रयोगविधिरियम् दण्डेः द्विशतसंख्यकांकनं क्रियते। अङ्कितदण्डं जले प्रवाहयुक्तायां नद्यां रात्रौ न्यसेत्। प्रातरुत्थाय तस्मिन् दण्डे नदीजलतलस्य पर्यवेक्षणमावश्यकं भवति। यदि जलतलदण्डस्थापनकालवत् भवति तर्हि वृष्टिर्गतवर्षवत् भवति। जलतलस्याधिक्ये अधिका, न्यूनत्वे अल्पावृष्टिर्गतवर्षवत् भवति। जलतलस्याधिक्ये अधिका, न्यूनत्वे अल्पावृष्टि र्भवति। अस्मिन् विषये परशरोक्तिरेवं विद्यते-

१. मयूरचित्रकम्, पृ. १८
२. वृहत्संहितायां सद्योवर्षणाध्याये, श्लोक २४
३. वनमाला, अध्याय ३

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रवाहयुतनद्यां तु दण्डं न्यस्य जले निशि।
वैशाखशुक्लप्रतिपत्तिथौ वृष्टिं निरूपयेत् ॥

ॐ सिद्धिरितिमन्त्रेण मन्त्रयित्वा शतद्वयम्।
अंकयित्वा तु तद्दण्डमङ्कतुल्ये जले क्षिपेत्॥

प्रातरुत्थाय सहसा तदङ्कं तु निरूपयेत्।
समं चैवाधिकं न्यूनं भविष्यज्ञलकांक्षया॥[१]

विधिरियं भौतिकशास्त्रस्य अन्तर्निधाय वर्त्तते अनेन विधिना तस्मिन् काले क्षेत्रविशेषस्य रात्रिदिवसयोर्तापमानस्यान्तरं वायुमण्डलस्यार्द्रवत्वं च ज्ञातं भवति। एतदर्थ भवति यज्जलतलस्यायतनं तापक्रमेण सहैव न्यूनत्वमाधिक्यं वोपपति। एवं प्रकारेण कालद्वय जलतलं दृष्ट्वा तदानीन्तनस्य तापक्रमस्यान्तरं ज्ञातं भवति। अनेन विधिना वैशाखशुक्लप्रतिपत्तिथौ रात्रिदिवसयोस्तापमानस्यान्तराधिक्यामागामि वृष्टिकाले समीचीना वृष्टिं सूचयतीति विधेरस्य भौतिकशास्त्रीयं रहस्यम्।

महर्षिणा गर्गेण आषाढरोहिणीयोगावसरे आगामिनी चातुर्मास्य वृष्टेर्ज्ञानाय निर्दिष्टविधिना कुम्भ-प्रयोग उपस्थापित: वैज्ञानिकदृष्ट्या विधिरयं रोहिणी योगावसरे वायुगतेः वायोरार्द्रतायाश्च मापनमधिकृत्य वर्त्तते।

अस्मिन् विधौ विविधदिक्स्थानां घटानां जलस्य न्यूनाधिकमात्रायां शोषणाद् दिग्विशेषगतस्य मारूतस्य आर्द्रतायां न्यूनाधिक्यं ज्ञानं भवति। यद्दिग्भवे मारूत आर्द्रताया आधिक्यं भवति तददिगस्थकुम्भस्य जलं न्यूनमात्रायां शुष्यति। यद्दिग्भवे मारूते आर्द्रताया न्यूनत्वं भवति तद्दिक्स्थस्य जलमधिकमात्रायां शुष्यति। अतो यदि दग्भवेन मारूतेन यस्य मासस्य वृष्टि: प्रभाविता भवति तद्दिग्भवस्य मारूतस्य आर्द्रताया स्थितिस्तस्य मासस्य वृष्टेः स्थितिं सूचयति। अनेन विधिना कालविशेषे दिग्विशेषभवस्य मारूतस्य आर्द्रतामाधीत्य यन्महर्षिणा फलं वर्णितं तत्सर्वथा वैज्ञानिकमेव। गर्गेणैवमुक्तम्-

प्रवाहयुतनद्यां तु दण्डं न्यस्य जले निशि।
इति पराशरेणोक्तं भविष्यद्वृष्टिलक्षणम्॥[२]

**वराहमिहरोक्तस्तुलाप्रयोगविधि:-**

आषाढमासस्य पूर्णिमायां समनपरिमाणेन गृहीतस्य कूपजलस्य, नदीजलस्य, तडागजलस्य तुलयाभार:

---

१. कृषिपराशरे, पृ. ११२-११५, श्लोक ४८-५६
२. कृषिपराशर, पृ. १२, श्लोक ४८, ५२

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

परीक्ष्यते। अत्र त्रिविधानामपि जलानां घनत्वं परीक्षितं भवति। कूपजलस्य घनत्वाधिक्ये सति आगामिवर्षे हीनावृष्टिर्जायते। नदीजलस्य घनत्वाधिक्ये मध्यमावृष्टिस्तथा तडागजलस्य घनत्वाधिक्ये सति अधिकावृष्टिर्भविष्यतीति बोध्याः।[१]

एतदतिरिक्तं ग्रहाणामुदयास्त-गति-स्थिति-संक्रान्ति-योगादिभ्यो वृष्ट्यादीनां ज्ञानं परमावश्यकम् भवति। सौरमण्डले विद्यामानाः सर्वे ग्रहाः दूरस्थिता अपि सुसम्बद्धा स्व-स्व प्रभावैः परस्परं प्रभावयन्ति। ग्रहणामुदयास्त-गति-स्थिति-सक्रान्ति योगदीनां निश्चितक्रमः वर्तते एतेषां प्रभावाः वृष्ट्यादौ भवन्त्येव। ग्रहाणामुदयास्त-गति-स्थिति-संक्रान्ति-योगादीनां निश्चितः क्रमः वर्तते एतेषां प्रभावैः परस्परं प्रभावयन्ति। ग्रहाणामुदयास्ताभं भाविवृष्टायादेः पूर्वानुमानं कृते स्थानविशेषे जलस्य चन्द्रोदयस्य, शुक्रोदयस्य, शुक्रास्तस्य एवं बुधादिग्रहाणामुदयास्तादीनां प्रभावः वृष्ट्यादि विषये भवति।

**सद्यो वृष्टिसूचिकाः लोकोक्तयः प्रसिद्धाः सन्ति तथैव वृष्टिविधानसूचिका लोकोक्त्योऽपि विद्यन्ते-दिन में गर्मी रात में ओस कह घाघ वर्षा सौ कोस। लगे अगस्त फूले वन कासा अब छोड़ो वरखा की आसा। जबै बहै हडहवा ( पश्चिम +दक्षिण ) कोण, तब वनजारा लादै लोन। बोली गोह फूली बनकास, अब नाही बड़खा की आस॥**[२]

वस्तुतः प्रथमं प्राच्यभारतीयस्य कृषिविज्ञानशास्त्रस्य परिशीलनमधिकृत्य शास्त्रस्याङ्गभूतानां मौसमविज्ञानस्य ऋतुविज्ञानस्य वृष्टिविज्ञानस्यानुशीलनं च परमावश्यकं वर्त्तते। महर्षेः पराशरस्य कृषि-पद्धतिग्रन्थस्य वचनं सर्वथा सार्थकं युगस्यानुरूपं समीचीनञ्चेति।

---

१. वृहत्संहितायां आषाढीयोगाध्याये, श्लोक ७

२. घाघोक्ति, प्राच्य-भारतीयम् ऋतुविज्ञानम्, पृ. १२४

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# धर्मशास्त्रशब्दार्थविमर्शः

डॉ. शङ्करकुमारमिश्रः

''धृञ् धारणे'' धातोः धर्मशब्दस्य निष्पत्तिर्भवति। धर्मशब्दस्य व्याख्या ''धारयति लोकान् ध्रियते वा पुण्यात्मभिः इति वा। यः लोकान् दधाति, अथवा पुण्यात्मभिः धारणं क्रियते स धर्मः।''

धर्मस्यार्थः सर्वप्रथमं ऋग्वेदे प्राप्यते। ऋग्वेदे धर्मशब्दस्य प्रायः षट्पञ्चाशत् (५६) आवृत्तयः सन्ति। ऋग्वेदे धर्मस्यार्थः विशेषणसंज्ञाशब्दरूपेण भवति। तत्र कुत्रचिद् धर्मशब्दः पोषणार्थे अस्ति, कुत्रचिद् आचारार्थे। कुत्रचिद् प्राचीननीतिनियमार्थे च धर्मशब्दः प्रयुक्तः अस्ति। वैदिकसाहित्ये धर्मशब्दस्यार्थः धार्मिकक्रिया, धार्मिकविधिः निश्चिताः नियमादयः सन्ति।

अथर्ववेदे धर्मशब्दस्यार्थः अस्ति, धार्मिकाचारैः पुण्यप्राप्तिः। वाजसनेयिसंहितायां ''ध्रुवेण धर्मणा'' इत्यर्थे धर्मशब्दः प्रयुक्तः अस्ति।

छन्दोग्योपनिषदि चतुर्णाम् आश्रमाणां विशिष्टकर्तव्ये अर्थे धर्मशब्दः प्रयुक्तः अस्ति।

तैत्तिरीयोपनिषदि-''सत्यं वद'' ''धर्मं चर'' इत्थं धर्मशब्दस्यार्थः अस्ति।[१]

मनुस्मृतौ धर्मशब्दस्यार्थः वर्णाश्रमविहितकर्तव्यम् अस्ति। एवं हि याज्ञवल्क्यस्मृतौ श्रीमद्भगवद्गीता च प्रभृतिग्रन्थेषु धर्मशब्दस्यार्थः उक्तम्, महर्षिकणादप्रणीतवैशेषिकदर्शने उक्तमस्ति-यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।[२] आश्वलायनगृह्यसूत्रे धर्मशब्दस्य विषये उक्तमस्ति यथा-धारणात् श्रेय आदधाति इति धर्मः अस्यार्थः अस्ति यत् यस्य व्यवहारेण मनुष्याणां ''श्रेयः'' भवति स ''धर्मः''।

महर्षिजैमिनिप्रणीतपूर्वमीमांसायां धर्मविषये उक्तमस्ति यथा-

चोदनालक्षणोऽर्थो धर्मः।[३] अस्यार्थः अस्ति उपदेशेन आज्ञया विधिना वा ज्ञातः श्रेयस्करः अर्थः धर्मः।

---

१. तैत्तिरीयोपनिषदि, १.११.१-३

२. वैशेषिकसूत्रे,

३. पूर्वमीमांसासूत्रे. १.१.२



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मनुस्मृतौ धर्मलक्षणस्य आधारस्य च विषये इत्थं स्पष्टीकरणमस्ति-

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥[१]**

मनोः मतानुसारं समग्र-वेदस्मृतीनां वेदज्ञानां शीलाचारः तथा च धार्मिक-साधूनां सज्जनानामात्मसन्तोषः धर्मस्य मूलाधारः वर्तते।

महर्षि याज्ञवल्क्यः उक्तवान्, यथा-

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥[२]**

एवमेव याज्ञवल्क्येन उक्तं यत् वेदस्मृति-धर्मसूत्रानुसारेण शिष्टजनानां सज्जनानां च आचारानुसारेण उपदेशानुसारेण तथा च स्वविवेकबुद्ध्यनुसारेण आत्मसंतोषानुसारेण सर्वजनानाम् आचरणं भवेत्।

**इज्याचारमाहिंसा-दानस्वाध्याय च-कर्मणाम्।**
**अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।**

अपि च यज्ञकर्मणि, सदाचारे, इन्द्रियदमने, अहिंसायां, दाने, वेदशास्त्राणामध्ययने, शास्त्रकर्मणामनुष्ठाने इत्यादिषु सर्वेषु योगेन आत्मदर्शनं स्वरूपानुभूतिः एव सर्वोत्तमः धर्मः अस्ति।

वेदान्तदर्शनस्य प्रवर्तको महर्षिव्यासो महाभारते धर्मस्य सन्दर्भे ब्रवीति।

**प्रभवार्थाय भूतानां धर्म-प्रवचनं कृतम्।**
**यः स्यात् प्रभवसंयुक्तः स धर्म इति निश्चयः॥[३]**

अयमाशयो यत् प्राणिनामभ्युदयाय कल्याणाय चैव धर्मस्य प्रचलनं कृतमस्ति। अतः यः उक्तोद्देश्यैः युक्तः अस्ति, यतः अभ्युदयःनिःश्रेयसिद्धिः च भवति स धर्मः, इत्थं धर्मज्ञानां निश्चयः अस्ति। पुनश्च उक्तं यथा-

**धारणात् धर्ममित्याहुः धर्मेण विधृताः प्रजाः।**
**यः स्यात् धारणसंयुक्तः स धर्म इति निश्चयः॥[४]**

---

१. मनुस्मृतौ, २.६
२. याज्ञवल्क्यस्मृतौ, १.७
३. महाभारते शान्तिपर्वे, १०९,१०
४. महाभारते शान्तिपर्वे, १०९.११

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अस्यार्थः अस्ति यत्-यया शक्त्या इयं सम्पूर्णा सृष्टिक्रिया धृता रक्षिता च भवति, सा शक्तिः ''धर्मः'' इति कथ्यते। पुनश्च उक्तमस्ति यथा- ''आचारलक्षणो धर्मः''- अस्यार्थः अस्ति यत् येन आचरणेन मनसः हृदयस्य च विकासः भवति तत् आचरणं ''धर्म'' इति कथ्यते। अपि च, महाभारते उक्तमस्ति, यथा-

**मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः।**
**तस्मात् सर्वेषु भूतेषु मनसा शिवमाचरेत्॥**[1]

अस्य तात्पर्यमस्ति यत् मनुष्याणां स्वाभाविकी सत्त्वगुणा च या प्रवृत्तिः अस्ति, सा प्रवृत्तिः धर्मः।

नारायणोपनिषदि उक्तमस्ति यत्-

**धर्मो विश्वस्य जगतः प्रतिष्ठा.................धर्मे सर्वं प्रतिष्ठितम्।**[2]

अभिप्रायोऽस्ति यत् सम्पूर्णविश्वस्य स्थितेः मूलं धर्मः अस्ति। धर्मेणैव समग्रसंसारः स्थितः अस्ति। दक्षस्मृतौ अपि उक्तमस्ति यत्-

**सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम्।**
**तस्माद् धर्मः सदा कार्यः सर्ववर्णैः प्रयत्नतः॥**[3]

अस्याभिप्रायः अस्ति यत् सर्वे प्राणिनः सुखमेव वाञ्छन्ति, तच्च धर्मसमुद्भवमस्ति, उत्पन्नं भवति, इत्यर्थः। अतः सर्वैः वर्णै धर्माचरणं कर्तव्यम्।

भारतरत्न डॉ. पाण्डुरङ्गवामनकोणेमहाशयः मनुते यत् धर्मेण किमपि ईश्वरीयं मतं न अभिप्रेतमस्ति, अपितु धर्मः आचरणस्य एका संहिताविशेषा या जनस्य क्रियाकलापं नियमयति। जनस्य क्रमबद्धो विकास एव धर्मस्य अन्तिमलक्ष्यम्।

लोकमान्यतिलकस्य विचारः वर्तते यत् दैनन्दिने व्यवहारे धर्मशब्दः पारलौकिकसुखस्य मार्गार्थे प्रयुक्तः भवति। किन्तु अयं पारलौकिकः धर्म मोक्षापरपर्यायः, किन्तु व्यावहारिकः धर्मः आचारः नीतिः वा। धर्मशास्त्रेषु सामान्य-धर्मः, विशिष्ट-धर्मः आपद्धर्मश्चेति धर्मस्य त्रयः भेदाः अवलोक्यन्ते। यः सर्वैः अनुसरणीयः भवति स सामान्यधर्मः कथ्यते। अयं मानवधर्मोऽपि कथयितुं शक्यते। अस्य उद्देश्य मानवमात्रे सद्गुणानां सर्वतोभावेन विकासः भवति। भगवान् मनुः दश सामान्य-धर्मान् परिगणयति।[4] प्रत्येकं जनस्य एकः स्वकीयः विशेषधर्मः भवति। यस्य ज्ञानस्य साधनं शास्त्रम् अस्ति। देशकालपरिस्थितिवशात् ''कदाचित्

---

१. महाभारते शान्तिपर्वे, १९३.३१

२. नारायणोपनिषदि, २२.१

३. दक्षस्मृतौ

४. धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्म लक्षणम्॥ मनुस्मृतिः, ६.९२

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

एवमपि अवसरः आयाति, तदा स्वधर्मेण विशिष्ट-धर्मेण वा जनस्य स्वकीयजीवननिर्वाहः कठिनः भवति।'' अस्यां स्थितौ शास्त्रकाराः आपद्धर्मस्य विधानं कुर्वन्ति। एवंभूते समये परधर्मोऽपि जीविकानिर्वाहायाहं कर्तुं शक्नोति। अयमेव धर्मसूत्रेषु विवेचितः वर्तते। अस्य धर्मस्य उल्लेखः धर्मसूत्रेषु धर्मशास्त्रेषु च वर्त्तते। यथा- गौतमधर्मसूत्र-मते ''वेदोऽखिलो धर्ममूलम्।'' आपतस्तम्बधर्मसूत्रानुसारम्-''धर्मज्ञसमयः प्रमाणम् वेदाश्च।'' बौधायनधर्मसूत्रे-वेदाः स्मृतिः शिष्टाचारादयः स्रोतांसि वर्तन्ते।

**धर्मशास्त्रस्य प्रारम्भः प्रतिपाद्यविषयश्च-**

वेदस्य आधारशिलायां भारतीय-संस्कृत्याः प्रसादः प्रतिष्ठितः वर्तते। प्रातिभज्ञानस्य आश्रयेण मन्त्रद्रष्टृभिः अनुभूतानामाध्यात्मिकतत्त्वानां विशालराशेः नाम ''वेद'' इति। वेदस्य मौलिकं तात्पर्यम् आध्यात्मिकसमस्यानां समाधानमस्ति।

आचार्यसायणमते वेदानां वेदत्वमिदमेवास्ति यत् ते प्रत्यक्षेण अनुमानेन वा अगम्यानां तत्त्वानां सुगमतया बोधं कारयन्ति।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥[१]

वस्तुतः भारतीयजीवनदर्शस्य अभिव्यक्तेः साधनभूताः वेदाः वर्तन्ते। सहस्रवर्षाणां निरन्तरश्रमेण उपार्जिताः इमे वेदाः एव भारतीयधर्मस्य मार्गदर्शकाः। एषामेव वेदानां विशिष्टाङ्गभूतस्य वेदाङ्गसाहित्यस्य अन्यतमभूतानि वर्तन्ते कल्पसूत्राणि श्रौतसूत्राणि धर्मसूत्राणि च।

कल्पस्यार्थः वर्तते, वेदे विहितानां कर्मणां क्रमपूर्वकं व्यवस्थितकल्पनाकारकं शास्त्रम्, कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्।

एषामेव कल्पसूत्राणामङ्गभूतानि वर्तते धर्मसूत्राणि यत्र चातुर्वर्ण्यस्य चतुराश्रमस्य च कर्तव्यानां तत्र च विशेषतः राज्ञां कर्तव्यानां विशिष्टं प्रतिपादनं तिष्ठति। धर्मसूत्रेष्वपि प्रधानतः वेदाः एव धर्मस्योपादानभूताः स्वीकृताः वर्तन्ते। आपस्तम्बधर्मसूत्रस्य इयं स्पष्टा घोषणा यत् ये खलु धर्मज्ञाः, वेदान् जानन्ति तेषां मतमेव धर्मप्रमाणभूतम्। धर्मसूत्राणामेव परम्परायां धर्मशास्त्रकाराः सम्पूर्णं वेदं, वेदज्ञानां परम्परां व्यवहारञ्च, सत्पुरुषाणामाचरणम् आत्मसन्तुष्टिञ्च धर्मोपपादनत्वेन स्वीकुर्वन्ति।[२] एवमेव याज्ञवल्क्योऽपि।[३]

---

१. तैत्तिरीयसंहितायाः भाष्योपोद्घातः, पृ. सं. २

२. वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ मनुस्मृतिः, २.६

३. श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥ याज्ञवल्क्यस्मृतिः, १.७, शतपथ ५.४.४.५

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

धर्मशास्त्राणामुद्भवस्य इतिहासः तत्त्वतः वेदेभ्य एव ज्ञायते। यथा समस्तलौकिकसाहित्यस्य उद्भवपरम्परा वेदादेव, तथैव धर्मशास्त्राणां विवेच्यानां वेदेषु धर्मविषयकाः सङ्केताः नोपलभ्यन्ते किन्तु प्रसङ्गतः समागताः विविधनिर्देशाः कालान्तरे धर्मशास्त्राणां प्रतिपाद्यस्य उपजीव्यभूताः।

ऋग्वेदे विभिन्नेषु स्थलेषु विवाहस्य, विविधप्रकाराणां, पुत्राणां भेदस्य, सम्पदः विज्ञाजनस्य, रिक्थलाभस्य, श्राद्धस्य, स्त्रीधनस्य च विषये विशेषेण उल्लेखाः लभ्यन्ते। भ्रातृहीना कन्या वरं न लभते एवम् इति ऋग्वेदस्य सङ्केत एव कालान्तरे धर्मशास्त्रेषु विशदम् उपन्यस्तः स्वीकृश्च। विवाहस्यापि विषये ऋग्वेदे चर्चाः। परिदृश्यन्ते। साम्प्रतमपि ऋग्वेदस्य विवाहविधौ पाठ्यन्ते, तथा च ''गृभ्णाभि ते सौभगत्वाय''।

धर्मसूत्रेषु मनुस्मृत्यादिषु च ब्राह्मविवाहविधिः- ऋग्वेदपरम्परामेवानुकरोति। गान्धर्वविवाहस्यापि उल्लेखः ऋग्वेदे मिलति-''भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जनेचित''।

एवमेव धर्मसूत्रेषु वर्णितस्य क्षेत्रजपुत्रस्य सङ्केतः ऋग्वेदे प्राप्यते। पिता जेष्ठाय पुत्राय सर्वं प्रदत्तवान् तथा भ्राता स्वभगिन्यै पितृपरम्परायाः प्राप्तस्य धनस्यांशमपि न प्रयच्छति एतस्यापि चर्चा ऋग्वेदे लभ्यते।[१]

स्त्री रिक्थस्य अधिकारात् ऋग्वेदे वञ्चिता तिष्ठति।[२] ब्रह्मचर्यस्य या महत्ता धर्मशास्त्रेषु बहुशः प्रतिपादिता सा ऋग्वेदे शतपथब्राह्मणे च पूर्वमेव चर्चिता।[३] शतपथब्राह्मण एव धृतव्रतस्य ब्राह्मणस्य राज्ञश्च चर्चां विदधाति।[४] कः यज्ञाय योग्योऽयोग्यो वा इति तैत्तिरीयसंहितायां प्रतिपादितमस्ति।[५]

वेदेषु ब्राह्मणेषु च दानस्य महिमगानं विशेषरूपेण लभ्यते। एभिः सङ्केतैः वेदेभ्यः ब्राह्मणेभ्यश्च धर्मशास्त्राणाम् उद्भवपरम्परा नूनं विज्ञायते। धर्मसूत्राणि धर्मशास्त्रतः।

तत्त्वतः भिन्नानि न वर्तन्ते। वस्तुतः उभयोः समुदितं तत्त्वमेव धर्मशास्त्रं कथ्यते। सत्यमस्ति यत् धर्मसूत्रेषु मनुयाज्ञवल्क्यादिकृतधर्मशास्त्रेभ्यः प्राचीनतराः सङ्केताः प्राप्यन्ते। एतस्य कारणमस्ति-धर्मसूत्राणां प्राचीनता। एषां धर्मसूत्राणाम्, धर्मशास्त्राणाञ्च प्रणयनस्य कः काल इति विषयः गम्भीरः प्रामाणिकरूपेण एतस्य विषये किमपि कथनं दुष्करमेव।

निरुक्तकारः यास्कः धर्मशास्त्राणां प्रकारान्तरेण सङ्केतं प्रयच्छति।[६] स रिक्थस्य विषये श्लोकं प्रामाण्यत्वेनोपस्थापयति, वैदिकसमये श्लोकाः नासन् अपितु ऋचः अतिष्ठन्। यास्कस्य उल्लेखः इदं ज्ञापयति

---

१. तसमाज्ज्येष्ठं पुत्रं धनेन निखसाययन्ति। ऋग्वेदः ३.३१.२
२. न जामये तान्वो रिक्थमारैक्। ऋग्वेदः ३.३१.२
३. ऋग्वेदः, १०.१०.९५, शतपथ, १.११.५.४.८
४. एष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्यसुधर्तव्रतौ।
५. तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः, शतपथ ५.४.४.५
६. तदेतदृक्श्लोकाभ्यामभ्युक्तम्। निरुक्तम्

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यत् धर्मसूत्राणि यास्कतः प्राचीनतराणि। गौतमसूत्रे धर्मशास्त्राणां चर्चा[१] बौधायनधर्मसूत्रेऽपि एवमेव तिष्ठति। बौधायनस्तु हारीतगौतमकौत्समौद्गल्यकात्यप्रभृतीनां स्मृतिकाराणां नामोल्लेखपुरस्सरं चर्चां निदधाति। आपस्तम्बोऽपि कण्वकौत्सहारीतादीनामुल्लेखं करोति। पूर्वमीमांसासूत्रेऽपि चर्चितम्।[२]

महाभाष्याकारः पतञ्जलिरपि धर्मसूत्राणां निर्देशं भगवतः आज्ञानन्तरं सर्वप्रमुखं प्रमाणं मनुते।[३] तथा च स आपस्तम्बधर्मसूत्रस्य तद्यथाग्रे फलार्थे निर्मिते छाया गन्ध इत्यनुपद्यते[४] इत्यंशतः प्रभावितः सन् कथयति आम्राश्च सिक्ताः पितरश्च प्रीणिताः पतञ्जलितः यास्कपर्यन्तं स्पष्टोल्लेखैः धर्मशास्त्रणामुद्भवकालः ख्रिष्टाब्दतः आरभ्य षट्शतवर्षस्य अन्तराले स्वीकर्तुं शक्यते।

एषु धर्मसूत्रेषु पी. वी. काणेमहाशयः गौतमधर्मसूत्रं सर्वप्राचीनं मनुते किन्तु राजवलीपाण्डेयः आपस्तम्बधर्मसूत्रं सर्वप्राचीनं स्वीकरोति।[५] काणेमहाशयः स्वयमेव एकत्र कथयति यत् बौधायना-पस्तम्बधर्मसूत्रयोः तुलनायां गौतमधर्मसूत्रस्य भाषा पाणिनिनियमत अतीव सामीप्यं भजते। तात्पर्यमिदं यत् आपस्तम्बबौधायनधर्मसूत्रयोः भाषा पाणिनिव्याकरणनियमतः क्वचिद् भिन्नापि तिष्ठति। अर्थात् नूनं धर्मशास्त्रे इमे पाणिनितः अतीव पूर्वकालिके वर्तेते तथा गौतमधर्मसूत्रतः प्राचीनतरे। बौधायनधर्मसूत्रे एकत्र गौतमस्य नियमचर्चा लभ्यते।[६]

आपस्तम्बधर्मसूत्रे गौतमधर्मसूत्रस्य नामल्लेखः न विद्यते। अतिप्राचीनाः स्मृतिकाराः शबरस्वामिप्रभृतयः आपस्तम्बम् उल्लेखयन्ति। बौद्धधर्मस्यापि क्वचित् आपस्तम्बधर्मसूत्रे सङ्केतोऽपि न दृश्यते। अतएव एतस्य समयः ख्रिष्टाब्दतः सकसहस्रवर्षपूर्वं स्वीकर्तुं शक्यते। अयमेव उद्भवकालः धर्मशास्त्राणां महत्याः परम्परायाः। एषामेव वेदानां विशिष्टांगभूतस्य वेदाङ्गसाहित्यस्य अन्यतमभूतानि वर्तन्ते कल्पसूत्राणि धर्मसूत्राणि च। कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्। एषामेव कल्पसूत्राणामङ्गभूतानि वर्तन्ते धर्मसूत्राणि यत्र चातुर्वर्ण्यस्य, चतुराश्रमस्य च कर्तव्यानां तत्र च विशेषतः राज्ञां कर्तव्यानां विशिष्टं प्रतिपादनं तिष्ठति। काव्यधर्मसूत्रेष्वपि प्रधानतः वेदाः एव धर्मस्योपादानभूताः स्वीकृता वर्तन्ते। आपस्तम्बधर्मसूत्रस्य इयं स्पष्टा घोषणा यत् ये खलु धर्मज्ञाः, ते वेदान् जानन्ति तेषां मतमेव धर्मप्रमाणभूतम्।

---

१. तस्य च व्यवहारो वेदा धर्मशास्त्रण्यङ्गानि
उपवेदाः पुराणम्। गौतमधर्मसूत्रम्, ९.२१

२. शूद्रस्य धर्मशास्त्रत्वात् पूर्वमीमांसासूत्रम्, ६.७.६

३. नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति
अपवादैस्सत्सर्गा बाह्यन्तामिति, धर्मशास्त्र का इतिहास, पृ. ८

४. आपस्तम्बधर्मसूत्र, १७.२०.३

५. हिन्दुशब्दकोषे

६. नेति गौतमोऽत्युग्रो हि क्षत्रधर्मो ब्राह्मणस्य। बौधा. २.२.६९-७०

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

धर्मसूत्राणामेव परम्परायां धर्मशास्त्रकाराः सम्पूर्णवेदं, वेदज्ञानं परम्परां व्यवहारञ्च, सत्पुरुषाणामाचरणम् आत्मसन्तुष्टिञ्च धर्मोपादानत्वेन स्वीकुर्वन्ति।[१]

याज्ञवल्क्योऽपि वेदं, स्मृतिं, सदाचारं, स्वस्य प्रियं वस्तु, उचितेन सङ्कल्पेन उत्पन्नामाकाङ्क्षाम् एतत् समुदितं धर्मस्योपादानत्वेन मनुते।[२] आधुनिकानाम् इतिहासविदामपि इदमेवाभिमतं यत् सर्वेषामुत्तरवैदिकग्रन्थानां सङ्कलनं पश्चिमोत्तरप्रदेशे, अर्थात् कुरुपाञ्चालादिदेशेषु सञ्जाता। एषु ग्रन्थेषु कर्मकाण्डस्य विपुलः समावेशः तिष्ठति। ख्रिष्टाब्दतः १००० वर्षपूर्वतः ५०० ईस्वीं यावत् कर्मकाण्डप्रधानेषु ग्रन्थेषु आचारपद्धत्याः राजव्यस्थायाश्च आकलनं वर्तते। ब्राह्मणग्रन्थेषु कर्मकाण्डेन सहैव राजोत्पत्तेः विषये काश्चन् व्याख्याः परिकल्पनाश्च प्रस्तुताः विद्यन्ते। मुख्यतः ऐतेरयब्राह्मणे शतपथब्राह्मणे च राजव्यवस्थाविषयिण्यः मान्यताः उपन्यस्ताः। उपनिषदः तत्त्वचिन्तनस्य मौलिकरचना अतस्तत्र राजव्यवस्थायाः विषये न कापि चर्चा साक्षाद्रूपेण कृता क्वाचित्कस्तत्र एतद्विषयकः सङ्केतः यदि स्यात् तदा स प्रासंगिकम् एव।

विश्वेश्वरानन्दानुसन्धानकेन्द्रतः वैदिकसाहित्यस्य या विशदा अनुक्रमणिका प्रकाशिता तया राजव्यवस्थायाः उत्तरवैदिकसाहित्ये स्रोतः साहाय्यं प्राप्तमस्ति।

---

१. अमाजूरिव पित्रोः स वा सती समानादासदसत्वामियेगमगम्, ऋग्वेद

२. आरोगिर्णी भ्रातृमतीमसमानार्षगोत्रजाम्। याज्ञवल्क्यस्मृति, १.५३

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# धर्मसूत्रेषु प्रायश्चित्तविधानम्

## ( मनुस्मृत्यालोके )

**श्रीवेदप्रकाशः**

'सर्वे भवन्तु सुखिनः' इतिवचनानुसारं प्राचीनकालादेव भारतीयसंस्कृतेः एतद् मूलोद्देश्यमस्ति अर्थात् सर्वे जनाः प्रसन्नाः भवन्तु। यतो हि प्रसन्नता मानवस्य जन्मसिद्धाधिकारोऽस्ति। वस्तुतः मानवः प्रसन्नतां तदैव प्राप्नोति यदा स अभीष्टं प्राप्नोति। यावन् मानवस्य इच्छानां पूर्तिः न भवति तावत् स अप्रसन्नो भूत्वा पापाचरणं दुष्कर्माणि च करोति। पुरातनकाले आचार्यैः पापानां निवारणार्थं प्रायश्चित्तकर्माणि विहितानि। 'पापम्' इत्यस्य शब्दस्य परिभाषा कठिना वर्तते। अस्य शब्दस्य निष्पत्तिः — पा (रक्षणे) धातोः 'प' प्रत्यये कृते भवति।[१] आचारापेक्षया पापशब्दस्य धर्मादधिकः सम्बन्धोऽस्ति। पापम् ईदृशं कर्म अस्ति यद् ईश्वरप्रदत्तव्यवहारस्यावहेलनया स्वेच्छया वा विरोधाद् उत्पन्नं भवति। इयं सामाजिकमान्यता आदिकालतः अनेन प्रकारेणैव कथ्यते यत् सर्वे जनाः तस्याः पालनं कुर्वन्तु।[२]

ऋग्वेदेऽपि पापानां निवारणाय वरुणादिदेवाः विभिन्नेषु मन्त्रेषु प्रार्थ्यन्ते।[३] 'ऋग्वेदे' 'यजुर्वेदे' च पापस्य पर्यायवाचिशब्दानामपि उल्लेखोऽस्ति, यथा- 'दुरितम्', 'रपस्', 'पापम्', 'अवद्यम्', 'अनृतम्', 'दुष्कृतम्', 'एनस्,' 'अपः', 'अंहस्' च।[४] ऋग्वेदे एव एकस्मिन् स्थले अयं सङ्केतः प्राप्नोति यन् मानवः केवलं जाग्रतावस्थायामेव पापं न करोति अपितु स्वप्नावस्थायामपि।[५]

---

१. पानीविषिभ्यः पः।
पाति रक्षत्यस्मादात्मानमिति पापम्। उणादिसूत्र, संख्या-३०३

२. काणे, धर्मशास्त्र का इतिहास, भाग ३, पृ. १०१५

३. पृच्छे तदेनो वरुण दिदृक्षूपो एभि चिकितुषो विपृच्छम्।
सामानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते॥ ऋ., ७.८६.३, ७.८९.५

४. विष्वग्वि वृहता रपः। यजु., ३६.३, ऋ ८.६७.२१
इदमापः प्रवहत यत्किञ्च दुरितं मयि।
यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम्॥ ऋ., १.२३.२२

५. न स स्वो दक्षो वरुण स्वप्नश्च नेदनृतस्य प्रयोता। ऋ., ७.८६.६



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

'यजुर्वेदे' मनः शिवसङ्कल्पकरणार्थं प्रार्थ्यते, यतो हि मनसः प्रवृत्तिः चञ्चला भवति अपि च तज्जाग्रतस्वप्नावस्थायां बहुदूरपर्यन्तं भ्रमति। एतस्मान् मनोऽपि दुष्कृत्यकारकम् अस्ति।[१]

शतपथ-ब्राह्मणे ऐतरेय-ब्राह्मणे च वर्णितं नपुंसकलिङ्गं 'पापम्' शब्दः अपि पापाय प्रयुज्यते।[२]

तैत्तिरीयोपनिषदि छान्दोग्योपनिषदि चापि 'पापम्' इत्यस्य शब्दस्य वर्णनमस्ति।[३]

गौतमधर्मसूत्रे प्रतिपादितं यन् मानवः दुष्कर्मभिः अपवित्रो भवति यथा-निषिद्धजनाय याजनम्, अभक्ष्यभोजनम्, अकथनीयस्य कथनम् च एतत् सर्वं पापकर्म मन्यते।[४] आपस्तम्बकारेण तस्याः युवतेः पतिः यस्याः कनिष्ठाभगिन्याः विवाहः पूर्वमेव भवति, यस्याः कनिष्ठसहोदरः तस्याः पूर्वमेव अग्निहोत्रमारभते, यः ज्येष्ठसहोदरात् प्रागेव पैतृकसम्पत्तौ स्वभागम् आप्नोति, एतत् सर्वं पापकर्म एव मन्यते।[५] मनुस्मृतिकारस्य याज्ञवल्क्यस्मृतिकारस्य च मते यः मानवः सन्ध्योपासनां शवस्पर्शानन्तरं च स्नानं न करोति, हिंसा करोति, धनं चोरयति, मद्यपानं करोति, द्यूतं क्रीडति सः 'अधमः' भवति।[६]

**पापस्य प्रकाराः**- 'निरुक्ते' पापस्य सप्त प्रकाराः मर्यादाः वा उल्लिखिताः सन्ति, यथा - स्तेयम्, तल्पारोहणम् (गुरुपत्नीगमनम्), ब्रह्महत्या, सुरापानम्, दुष्कर्म, पापिनः शुश्रूषा, अनृतं च। 'अथर्ववेदेऽपि' सप्तानां मर्यादानामुल्लेखो मिलति।[७] एतेषां मर्यादानां यः अवहेलनां करोति सः 'पापी' इति कथ्यते।

छान्दोग्योपनिषदि पञ्चपापकर्मणां वर्णनमस्ति, यथा-स्तेयम्, सुरापानम्, गुरुतल्पगामी, ब्रह्महत्या, एतेषां चतुर्णां संसर्गश्च।[८]

---

१. यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवेति।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु॥ यजु., ३४.१

२. श. ब्रा., ११.२.७.१९, ऐ. ब्रा., ३३.५

३. किमहं पापमकरवामिति। तै. उ., २.९

४. अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते।
यथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति। गौ. ध. सू., ३.१.२

५. आ. ध. सू., २.५.१२.२२

६. (क) अकुर्वन्विहितं कर्म निन्दितं च समाचरन्।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः। मनु. ११.४४
(ख) या.स्मृ., ३.२१९

७. (क) सप्तमर्यादा कवयस्ततक्षुस्तासामिदेकामभ्यं हुरो गात्। निरुक्त, ६.२७
(ख) अथर्व., ५.१.६

८. स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावनसन् ब्रह्महा।
चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः॥ छा. उ., ५.१०

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

पापानां संख्यायाः विषये धर्मसूत्रकारैः विभिन्नानि मतानि उपस्थापितानि।

गौतमधर्मसूत्रकारेण पातकः, उपपातकः, महापातकश्च इति एतेषां त्रयाणां पापानां वर्णनं कृतम्।[१] आपस्तम्बकारेण पतनीयः, अशुचिकरश्च इति पापकर्मद्वयं स्वीक्रियते।[२] बौधायनधर्मसूत्रकारेण पतनीयः, उपपातकः, अशुचिकरश्च इति त्रीणि पापकर्माणि मन्यन्ते।[३] वसिष्ठधर्मसूत्रकारः एनस्वी, महापातकी, उपपातकी च इति त्रीणि पापकर्माणि स्वीकरोति।[४] मनुस्मृतिकारः याज्ञवल्क्यस्मृतिकारश्च महापातकः, उपपातकश्च इति पापकर्मद्वयं स्वीकुरुतः।[५]

**'प्रायश्चित्तम्' इति पदस्य व्युत्पत्तिः अर्थश्च**—प्रायः सर्वैः धर्मशास्त्रकारैः पापेभ्यः विमुक्तये प्रायश्चित्तस्य विधानं कृतम्। वैदिकसाहित्ये प्रायश्चित्तिः प्रायश्चित्तञ्च इति द्वयोः पदयोः व्यवहारोऽस्ति। अथर्ववेदे शतपथ-ब्राह्मणे पारस्कर-गृह्यसूत्रे च प्रायश्चित्तिः इति पदं प्रयुक्तम्।[६] तैत्तिरीयसंहितायामपि एकस्मिन् स्थले प्रायश्चित्तिः इति पदस्य उल्लेखोऽस्ति, परं तत्र पदमिदं पापार्थकं नास्ति।[७]

**आप्टेमहोदयेन प्रायश्चित्तशब्दस्य अर्थः कृतः**—परिशोधः, पापनिष्कृतिः, क्षतिपूर्तिः, पापानिस्तारः, धार्मिकसाधना इत्यादयः।[८]

गौतमधर्मसूत्रस्य हरदत्तटीकायां प्रायश्चित्तशब्दस्य व्युत्पत्तिः प्रायेण (तपसा) चित्तेन (सङ्कल्पेन) च क्रियते, यस्यार्थाः तपसः निश्चयेन सह संसर्गः।[९]

मनुमते तु यदि कश्चन प्रायश्चित्तं न करोति, तस्य सामाजिको बहिष्कारः करणीयः। याज्ञवल्क्यस्य मते मनुष्येन आत्मशुद्धयर्थं प्रायश्चित्तकर्म करणीयम्, यतो हि स ईदृशं कर्म करोति चेत्तर्हि तस्य अन्तरात्मा

---

१. गौ. ध. सू., ३.३.१, ३.१०.११, ३.३.१०
२. आ. ध. सू., १.७.२१.७-८, १.७.२१.१२-१७
३. बौ. ध. सू., २.१.२.१-२, २.१.२.४-५, २.१.२.७-८
४. व. ध. सू., १.१९-२३
५. (क) मनु., ११.५४, ११.५९-६६
 (ख) या. स्मृ., ३.२६१, ३.२२९-२३६
६. (क) अथर्व., १४.१.३०, श. ब्रा., ६.६.४.१४, ६.६.४.११
 (ख) पा. गृ., १.१०
७. यदि भिद्यते तैरेव कपालैः संसृजेत्सैव ततः प्रायश्चित्तिः। तै. सं., ५.१.९.३,
८. आप्टे, हिन्दी-संस्कृत कोश, पृ. ६९१
९. प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
 तपोभिश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम्॥ गौ. ध. सू. ३.४.१, पर हरदत्त टीका, पृ. २१९

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

लोकश्च उभौ प्रसन्नौ भवतः।[१] याज्ञवल्क्यस्मृतिकारेण एकस्मिन् स्थले शूद्रवर्णायापि प्रायश्चित्तस्य विधानं क्रियते।[२] गौतमधर्मसूत्रकारस्य बौधायनधर्मसूत्रकारस्य च मते जप-तप-होम-दान-उपवासादयः पवित्रा उपायाः सन्ति, यै विशुद्धो भूत्वा मनुष्यः पुनः समाजे प्रवेशं कर्तुं शक्नोति।[३] मनुदिशा स्वकृतं पापं सर्वेभ्यः कथनेन, निजकुकृत्यस्य प्रायश्चित्तकरणेन, जप-तप-पाठ-दानादिभिश्च पापी मनुष्यः पापाद् विमुक्तो भवति।[४]

प्रायेण सर्वे धर्मशास्त्रकाराः पापकर्मणि प्रायश्चित्तकर्मणां विधानं कुर्वन्ति। प्रस्तुतशोधपत्रे केवलं त्रयाणां पापकर्मणां विचारः क्रियते—१. ब्रह्महत्या, २. सुरापानम्, ३. स्तेनम् चेति।

**१. ब्रह्महत्यायाः प्रायश्चित्तम्**—सर्वैः धर्मशास्त्रकारैः विप्रहत्या महापातकपापस्यान्तर्गतेति मन्यते। तैत्तिरीयसंहितायां ब्रह्महत्या महापापः इति स्वीक्रियते,[५] आपस्तम्बकारेण ब्रह्मघातकः अभिशस्तः कथ्यते। हरदत्तमहोदयेन अभिशस्तशब्दस्यार्थः 'ब्राह्मणमहापातकी' इति कथ्यते।[६] महर्षिगौतममतानुसारं यदि कोऽपि जनः ज्ञात्वाऽपि ब्राह्मणस्य हत्यां करोति तर्हि सः भोजनं परित्यज्य दुर्बलशरीरवान् भूत्वा त्रिवारम् यदि अग्नौ कूर्दति तर्हि सः ब्रह्महत्यापापात् विमुक्तो भवति।[७] आपस्तम्बस्य बौधायनस्य चेति उभयोः धर्मसूत्रकारयोः मते यः कोऽपि ब्रह्महत्यां करोति तेन वने एकान्ते पर्णकुटीं रचयित्वा वाणीं संयम्य शिरः कुण्डे स्थाप्य वस्त्रं धारयित्वा हस्ते धातुपात्रं गृहीत्वा उच्चारणं कुर्वता सप्तसु गृहेषु भिक्षाचरणं करणीयम्। भिक्षायाः अभावे उपवासः करणीयः। अनेन प्रकारेण द्वादशवर्षाणि यावत् प्रायश्चित्तानन्तरं मनुष्यः पुनः समाजे प्रवेशार्हो भवति।[८] मनुस्मृतिकारेणापि एतत् स्वीक्रियते।[९] सर्वेषां धर्मसूत्रकाराणां मते ज्ञातवान् ब्रह्महत्यारामनुष्यः यदि

---

१. (क) एनस्विभिरनिर्णिक्तैर्नार्थे किंचित्सहाचरेत। मनु, ११.१८९
(ख) तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति॥ या. स्मृ., ३.२२०

२. शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यति। तदेव, ३.२६२

३. (क) तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम्। गौ. ध. सू., ३.१.११
(ख) तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम्। बौ. ध. सू., ३.१०.१०.१०

४. ख्यापनेनानुपातेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि॥ मनु. ११.२२७

५. ब्रह्महत्यामुपागृह्णात्। तै. सं., २.५.१.२

६. आ. ध. सू., १.९.२४.७, हरदत्त टीका, पृ. १८१

७. अग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य। गौ. ध. सू., ३.४.२

८. (क) आ. ध. सू., १.९.२४.११, १५,१७,१८,२०
(ख) बौ. ध. सू., २.१.१.१.२-३, गोविन्द स्वामी टीका, पृ. १५४

९. (क) ब्रह्महा, द्वादशसमाः कुटिं कृत्वा वने वसेत्।
भैक्षाश्यात्मविशुद्ध्यर्थे कृत्वा शवशिरोध्वजम्॥ मनु., ११.७२
(ख) एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः।
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति॥ तदेव, ११.८१

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

क्षत्रियोऽस्ति तर्हि सः युद्धभूमौ स्थित्वे अन्यैः यौद्धाभिः तं ब्रह्महत्यारा ज्ञात्वा तस्य हननं करणीयम्।[१] मनुस्मृतिकारोऽपि धर्मसूत्रकाराणां मतं मन्यते परन्तु याज्ञवल्क्यस्य मते सः ब्रह्महत्यारा युद्धभूमौ आहतवेऽपि ब्रह्महत्यायाः पापात् विमुक्तो भवति।[२]

**२. सुरापानस्य प्रायश्चित्तम्**—प्रायः सर्वैः धर्मशास्त्रकारैः सुरापानं महापातकमिति प्रतिपादितम्। सर्वप्रथमम् ऋग्वेदे 'सुरा' शब्दस्य उल्लेखो मिलति। तत्र सुरापानं द्यूतवत् पापं कथ्यते।[३] तैत्तिरीयसंहितायां शतपथ-ब्राह्मणे च सोम-सुरयोः अन्तरं स्पष्टीकर्तुं कथ्यते यत् सोमः सत्यम् अस्ति, समृद्धय अस्ति ज्योतिश्च अस्ति परं सुरा अनृतं पापम् अन्धकारश्च कथ्यते।[४] प्रायशः सर्वधर्मसूत्रकारानुसारं यदि कोऽपि जनः प्रथमवारमपि मद्यपानं करोति तर्हि तस्य देहावसाने एव प्रायश्चित्तं भवति, गौतममतानुसारं तस्य मुखे शलाका पातनीया।[५] मनुस्मृतिकारोऽपि एतन् मतं स्वीकरोति। याज्ञवल्क्यमते मद्यपानेन सह जलं, घृतं, गोमूत्रं, दुग्धञ्च इत्येतेषु कस्यचिद् एकस्य बहुमात्रायां पानं कारणीयं, यदि तस्य मृत्युर्भवति तर्हि तस्य शुद्धिर्भवति।[६]

महर्षिगौतमस्य मते यदि कोऽपि जनः अज्ञानवशात् सुरापानं करोति तर्हि तेन त्रीणि दिनानि यावद् उष्णदुग्धस्य, घृतस्य, जलस्य, उष्णवायोश्च सेवनं करणीयम्। तस्मात् तप्तकृच्छ्रकृत्वा तस्य उपनयनसंस्कारः भवति।[७] बौधायनधर्मसूत्रकारमते मासत्रयं यावत् कृच्छ्रउपवासे कृते पुनः तस्य उपनयनसंस्कारः भवति, मनुमतानुसारं अज्ञानतया सुरापाने पुनः संस्कारेण एव तस्य शुद्धिः भवति।[८]

---

१. (क) लक्ष्यं वा स्याज्यन्ये शस्त्रभृताम्। गौ. ध. सू., १.४.३
(ख) प्रथमं वणं परिहाह्य प्रथमं वणं हत्वा।
सङ्ग्राम गत्वाऽवतिष्ठेत् तत्रैनं हन्युः॥ बौ. ध. सू., १.९.२५.१२
२. (क) लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः। मनु., ११.७३
(ख) या. स्मृ., ३.२४८
३. ऋ., १.११६.७, ८.२.१२
४. (क) तै. सं., २.५.१.१
(ख) सत्य वै श्रीः ज्योतिः सोमऽनृतं पाप्मातमः सुरा। श. ब्रा., ५.१.५.२८
५. (क) सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येत्। गौ. ध. सू., ३.५.१
(ख)सुरापोऽग्निस्पर्शां सुरां पिबेत्। आ. धा. सू., १.९.२५.३
(ग) बौ. ध. सू., २.१.१.१७
६. (क) सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्।
तया स काये निर्दग्धमुच्यते किल्विषात्ततः॥ मनु., ११.९०
(ख) या. स्मृ., ३.२५३
७. अमत्या पाने पयो घृतमुदकं वायुं प्रक्तियहं तप्तानि सकृच्छ्रस्ततोऽस्य संस्कारः। गौ. ध. सू., ३.५.२
८. (क) बौ. ध. सू., २.१.१.१८, २०, २१
(ख) अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति। मनु., ११.१४६

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**३. स्तेनस्य प्रायश्चित्तम्**—सर्वैः धर्मसूत्रकारैः एकमत्येन चौराय प्रायश्चित्तस्य विधानं क्रियते। महर्षिगौतमस्य मते स्वामिनः अनुमतिं विना वस्तूनां ग्रहणं स्तेनकार्यं मन्यते, यथा-अग्नये ईंधनम्, लतानां वृक्षानां च पुष्पाणि इत्यादयः। आपस्तम्बकारस्य मते आपातकालावस्थायां अपरस्य सम्पत्तेः हरणं स्तेनः कथ्यते। परन्तु अल्पमात्रायां पुष्पं घासं च गृहीतुम् शक्यते।[१] किन्तु स्मृतिकारः एतस्य कृते दण्डस्य विधानं करोति।[२] धर्मसूत्रकारयोः गौतमापस्तम्बयोः मते यदि चौरः स्वकेशान् उद्घाटयित्वा स्कन्धयोः मूशलं स्थापयित्वा राज्ञः पार्श्वे गत्वा तम् स्वचौर्यकर्मावगतं कारयेत् तर्हि नृपः तेन मूशलेन चौरस्योपरि प्रहारं करोति तेन प्रहारेण च यदि तस्य चौरस्य मृत्युर्भवति तर्हि स पापाद् विमुक्तो भवति।[३] मनुस्मृतिकारः याज्ञवल्क्यस्मृतिकारश्चापि एतन् मतं स्वीकुर्वतः।[४]

प्रायशः सर्वेषां धर्मसूत्रकाराणां मते यदि नृपः चौरं चेतयित्वा अर्थात् क्षमां कृत्वा परित्यजति तर्हि राजा पापं गृह्णति। एकस्मिन् अन्यस्थले आपस्तम्बकारेण कथ्यते यदसौ चौरः स्वशरीरम् अग्निं पातयेत् अथवा कठोरतपसा अल्पभोजनेन च निजजीवनं समापयेत्। अस्य विकल्पे एकवर्षं यावत् कृच्छ्रव्रतमपि कर्तुं शक्नोति।[५] परन्तु मनुस्मृतिकारेण चौर्यकरणे द्विजाय पुरातनानि वस्त्राणि धारयित्वा ब्रह्महत्यायै विहितं प्रायश्चितं विधीयते।[६]

निष्कर्षतः वयमेतद् कथयितुं शक्नुमः यद् वैदिककाले शासनव्यवस्था सुचारुतया परिचलेदित्येतदर्थं समस्तपापानां निवारणार्थं जनाः प्रायश्चित्तं कुर्वन्ति स्म। प्राचीनकाले दण्डप्रायश्चित्तयोः वैकल्पिकता आसीत्।

---

१. (क) गोग्न्यर्थे तृणमेधान्वीरुद्धनस्पतीनां च पुष्पाणि
स्ववदाददीत फलानि चापरिवृतानाम्। गौ. ध. सू., २.३.२५
(ख) यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह
भवतीति कौत्स हरीतौ तथा काण्यपुष्करसादी। आ. ध. सू., १.१०.२८.१
(ग) शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति। तदेव, १.१०.२८.३-४

२. मनु., ८.३३०

३. (क) स्तेनः प्रकीर्णकेशो मुसली राजानभियात्कर्माऽऽचक्षणः। गौ. ध. सू., २.३.४०
(ख) स्तेन प्रकीर्णकेशोऽसे मूसलमाधाय राजानं गत्वा कमाऽऽचक्षीत। तेनैनं हन्याद्वधे मोक्षः।
आ. ध. सू. १-९.२५.४-५

४. (क) मनु., ११.१००
(ख) या. स्मृ. ३.२५७

५. (क)अघ्नत्रेनस्वी राजा। गौ. ध. सू., २.३.४२
(ख) अनुज्ञातेऽनुज्ञातारमेनः स्पृशति। आ. ध. सू. १-९.२५-५
(ग) तदेव, १.९.२५.६-९

६. तपसापनुनुत्सुस्तु सुवर्णस्तेयजं मलम्।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम्॥ मनु., ११.१०१

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रायश्चित्तस्य मुख्योद्देश्यमात्मशुद्धिः पापाद् विमुक्तिश्चासीत् परं दण्डव्यवस्थायाः प्रमुखलक्ष्यं प्रजारक्षणं शासनव्यवस्थायाश्च सञ्चालनमासीत्। तथापि दण्डप्रायश्चित्ते उभे सममेव चलतः स्म। धर्मसूत्रेषु अनेकप्रकाराणां प्रायश्चित्तानां विधानमस्ति। धर्मसूत्रकालीनप्रायश्चित्तानाम् आधुनिकसन्दर्भे का उपयोगिता वर्तते अस्मिन् विषयेऽपि गम्भीरतया चिन्तनं क्रियते। धर्मसूत्रेषु ब्रह्महत्यादोषापाकरणाय यत् प्रायश्चित्तं मिलति तद् आधुनिकयुगे तर्कसंगतं नास्ति, यतो हि वर्तमानकाले लोकतन्त्रात्मकव्यवस्थात्वात् सर्वैः वर्णैः सह भेदभावं विना समानव्यवहारो भवति, यद् दण्डः प्रायश्चित्तं वा ब्रह्महत्यायामस्ति तदेव अन्यवर्णसम्बद्धानां मनुष्याणां हननेऽपि भवेत्। धर्मसूत्रेषु सुरापानं पापकर्म मन्यते, परं पर्तमाने सुरापानं पापं नास्ति अपि तु अस्या विपरीतम् एतद् अद्यत्वे सर्वकारस्य कृते राजस्वस्य उत्तमं साधनमस्ति। धर्मसूत्रेषु चौरकार्यायापि मृत्युदण्डस्य विधानमस्ति परम् आधुनिक-न्यायप्रणाल्यां चौरस्य चौरकर्मगम्भीरतामाधारीकृत्य दण्डः प्रदीयते।

परमद्यापि किञ्चित् पापनिवृत्तये प्रायश्चित्तं प्रत्यक्षपरोक्षरूपेण समाजे प्रचलितमस्ति। उदाहरणतः अद्यापि गोहत्या-वृषहत्यादिपापकर्मकृतेषु प्रायश्चित्तस्य परम्परा देशस्याधिकांशभागे प्रचलितास्ति। बलात्कारादिषु अनेकपापकर्मसु पीडितया सह तस्य पुरुषस्य पाणिग्रहणसंस्कारादयः अनेकेः निर्णयाः अद्यापि ग्रामसभाभिः प्रायश्चित्तरूपेण विधीयन्ते। सिरमुण्डनम्, गंगास्नानम्, विप्रभोजनम्, पञ्चमहायज्ञादयः इत्येतानि सर्वाणि अस्माकं प्रायश्चितकर्माणि सन्ति।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# भारतीयवाङ्मये योगस्वरूपम्

डॉ.महेशप्रसादसिलोड़ी

योगस्य महिमानं को न विज्ञो जानाति। योगमार्गेणैव स्वात्मस्वरूपं लभत इति श्रुतिस्मृतिषु प्रतिपादितम्। आत्मतत्त्वात् परमसूक्ष्मतत्त्वं किमपि नाऽस्ति। तत् सूक्ष्मतत्त्वं योगसाधनेनैव सूक्ष्मतायाः पराकाष्ठायां प्राप्तायामधिगन्तुं शक्यते। तस्याश्च सूक्ष्मतायाः समाधिं विना नैव यातुं शक्यते। यौगिकसाधना सर्वथा वैज्ञानिकी तथा सार्वभौमिकसाधना अस्ति। प्रकृतेः सूक्ष्मतमं विज्ञानं योगाङ्गानां साधनेनैव साक्षात्क्रियते। यत् तत्त्वं सूक्ष्मं भवति तत् तावदेव व्यापकं तथा शक्तिसम्पन्नम्भवति। यथा परमाणुः सूक्ष्मतमं तत्त्वं वर्तते, परमयं परमाणुः सर्वाधिकशक्तिशाली भवति।

योगी योगसाधनतया चित्तशुद्धिं कुर्वाणः ज्ञानविज्ञानस्य क्षेत्रं विकासयन् गच्छति। अस्यैव फलस्वरूपेण तस्मै प्रज्ञालोकस्य प्राप्तिर्जायते। अनेनालोकेन सदैव ऐश्वर्याणि उदितानि भवन्ति। यथा सूर्योदये जाते सति प्रकाशोष्णते युगपदेव जायेते। वेदानां रहस्यं योगिभिरेव ज्ञातुं शक्यम् । यथोक्तम् उत्तरगीतायाम्— **सारस्तु योगिभिस्पीतं तक्रमश्नन्ति पण्डिताः**। ये जनाः यमनियमानां पालने दृढा न सन्ति तथा यैः सिद्धगुरोः सान्निध्यं एवं कठोरानुशासने निबद्धो भूत्वा साधना न कृता स्यात् तेषामहङ्कारनाशो न भवति। एतादृशाः जनाः सिद्धीनां दुरूपयोगं कुर्वन्ति, फलतः साधनातः च्युताः भवन्ति।

## योगस्य स्वरूपम्

सर्वतः प्राक् योगशब्दस्य परिभाषा कीदृशी वर्ततेऽत्र विचारणीयम्। योग इतिशब्दः १. युज् समाधौ (दिवादिगण) इति धातौ घञ् प्रत्यये जाते सति निष्पन्नो भवति। पाणिनीयव्याकरणानुसारेण २. युजिर्-योगे (रूधादिगण)। ३. युज् संयमने (चुरादिगण) इति द्वाभ्यां धातुभ्यामपि योगशब्दः व्युत्पाद्यते। एतेषु योगदर्शनकारस्य युज् समाधौ एव योगस्य प्रयोगो अभीष्टः। संस्कृतवाङ्मये धातुत्रयेण व्युत्पादितस्य योगशब्दस्य बाहुल्येन प्रयोगो कृतः। जनाः स्वाभिरुचिना योग्यानुसारेण अर्थं र्कुवन्ति।

योगशब्दस्य विभिन्नशास्त्रेषु भिन्ना-२ अर्थाः सन्ति। ज्योतिषशास्त्रे ग्रहाणां योगः, आयुर्वेदशास्त्रे औषधयोगः, अंकशास्त्रे अंकयोगः। इत्येतेषु शास्त्रेषु प्रयुक्तः योगशब्दः भिन्नान् अर्थान् द्योतयति।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

गीतायां पदे पदे योगशब्दस्य प्रयोगो विहितः। योगी, योगः, मुक्त-योगी, इति शब्दानां स्वरूपं परिभाषिताः सन्ति। तत्र भिन्ने-२ अर्थे योग उपदिष्टः। **यथा—योगः कर्मसु कौशलम् ,समत्वं-योगमुच्यते, योगस्थ कुरू कर्माणि, योगसंन्यस्तकर्मणाम्,** योगयुतात्मा, **तस्मात् सर्वकालेषु योग युक्तो भवार्जुन! यं संन्यासमिति प्राहुः योगं तं विद्धि पाण्डवः।**

योगशब्दस्य यथार्थस्वरूपज्ञानाय पातञ्जलयोगदर्शनस्य अध्ययनम् अत्यावश्यकमस्ति। यद्यपि उपनिषत्सु तथा इतरयोगग्रन्थेष्वपि योगः प्रतिपादितः, किन्तु तादृशं पूर्णं शुद्धं स्वरूपमन्यत्र न उपलभ्यते यथा पातञ्जलदर्शने।

दार्शनिकैः ऋषिभिः मुनिभिश्च साधना प्रणाली तथा अधिकारीभेदेन साधनायाः नैके मार्गाः प्रदर्शिताः यैः सह योगशब्दः प्रयुक्तः, यथा— मन्त्रयोगः, लययोगः, राजयोगः, ध्यानयोगः, बिन्दुयोगः, भक्तियोगः, नादयोगश्चेति प्रसिद्धम्।

उपनिषत्सु प्राणस्पन्दनिरोधेन चित्तरोधः जायते इति प्रसिद्धम्। दृढयोगिनः षट्कर्मप्राणायाम-सम्बन्धमुद्रादि अभ्यासेन प्राणजयाय प्रयतन्ते, प्राणायामाभ्यासेन चित्तावरणस्य क्षयो भवति, प्रज्ञालोकस्य च उद्भवः इति। यथा उन्मतहस्ती अङ्कुशेन वशीक्रियते तथैव चञ्चलमनसः प्राणायामेन वशीकारो भवति।

**नानाविधविचारैस्तु न बाध्यं जायते मनः।**
**तस्मात् तस्य जयोपायः प्राण एव हि नान्यथा॥**

चित्तं प्राणेन सम्बद्धं विद्यते, अतः प्राणजयेनैव चित्तजयो सम्भवति इति श्रुतिसम्मतम्।

हठयोगग्रन्थेषूपदिष्टा साधना प्राणजयाय एव सन्ति, अस्य उपायभूतसाधनानि आसनप्राणायाम-बन्धमुद्राश्च सन्ति। भगवता पतञ्जलिना योगस्य दार्शनिकं वास्तविकं च स्वरूपं प्रतिपादितम्। तद्यथा **योगश्चित्तवृत्तिनिरोध** इति। **योगसमाधिः** अनेन सूत्रेण सूत्रकारैः योगस्य परिभाषा कथिता। **तदा द्रष्टुस्वरूपे—ऽवस्थानम्** एताभ्यां सूत्राभ्यां योगस्य फलं स्वरूपं च दर्शितम्। योगो द्विधा विभजते, सम्प्रज्ञातः असम्प्रज्ञातश्च।

**सम्प्रज्ञातसमाधिः—**वितर्कविचारानन्दास्मिताभेदैः चतुर्धा वर्त्तते।

१. वितर्कानुगतविशेषेण तर्क अवधारणं वितर्कः, वितर्कसमाधौ चित्तस्य ध्येयवस्तु स्थूलविषयं भवति, यथा-पृथिवी-सूर्य-चन्द्रादि स्थूलभूतानां साक्षात्कारो भवति।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**२. विचारानुगतसमाधिः**—विशेषेण चरणं सूक्ष्मवस्तुपर्यन्तमिति विचारः। अत्र-तन्मात्राणां साक्षात्कारो भवति। स्वर्गादे-इन्द्रादिदेवता दिव्याः कन्याः दिव्यो भोगादयाः।

**३. आनन्दानुगतसमाधिः**—सविचारस्य दृढाभ्यासे जाते सति योगिन आनन्दानुगतसमाधौ प्रवेशो जायते। अत्र इन्द्रियाणां साक्षात्कारो भवति, तत्र इष्टदर्शनं भवति।

**४. अस्मितानुगतसमाधिः**—अत्र योगी प्रकृतिः तज्जातान् समस्तान् विषयान् साक्षात्कृत्य उपरमते। तदानीम् "अस्मि-अस्मि" इत्येकावृत्तिरवशिष्यते। अत्र चित्तनिर्माणयोग्यता तथा च "ऋतम्भरा प्रज्ञा" इति सिद्धिं प्राप्नोति।

**असम्प्रज्ञातसमाधिः**

असम्प्रज्ञातसमाधौ ज्ञाता, ज्ञानं, ज्ञेयम् इति त्रिपुटीभेदः न बुध्यते। यथा लवणं जले निक्षिप्तं जलमयं भवति तथैव चित्तवृत्तय-ब्रह्मणि लीनाः जायन्ते। एष निरालम्बनो समाधिः। अस्मिन् समाधौ वृत्तयः न तिष्ठन्ति। वृत्तीनां विलीयमानत्वात् चित्तं पूर्णतः निरुद्धावस्थायां तिष्ठति। अस्य कारणं पर वैराग्यमेव। अस्मिन् प्रज्ञा संस्कारा अपि न भवन्ति। एतस्यामवस्थायां द्रष्टा पुरुषः स्वस्वरूमवस्थितो भवति। अस्य निर्बीजसमाधिः इति संज्ञा। जीवात्मपरमात्मनो ऐक्यं समत्वं वा अस्मिन् समाधावेव भवति। एषा अवस्था कैवल्यमित्युच्यते।

उपायप्रत्ययो योगिनां भवति, भवप्रत्ययः देवानां भवति।

**पातञ्जलदर्शने**—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिश्चेइति योगस्य अष्टाङ्गानि वर्णितानि सन्ति।

**वेदेषु योगः**—"**वेदोऽखिलो धर्ममूलम्**" इति वचनानुसारेण अद्य यत्किमपि ज्ञानविज्ञाने विद्येते तयोः मूलाधारो वेदाः। पुरा सूक्ष्मदर्शिभिः योगिभिः सम्प्रज्ञातसमाधौ यद् अपौरुषेयज्ञानं साक्षात्कृतवन्तः तदेव वेदाः। ऋषयो मन्त्रद्रष्टारः इत्यादिवचनेन ज्ञायते यत् वेदमन्त्राणां द्रष्टारः न तु रचयितारः। वेदमन्त्रेषु यत् निगूढं रहस्यं तत्केवलं योगस्य विवेकप्रज्ञया (ऋतम्भराः तत्र प्रज्ञाः) योगिभिः उद्घाटितुं शक्यते।

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।**
**तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय॥**

**महीधरभाष्ये वर्णितम्**—सर्वोत्कृष्टपुरुषं सूर्यमण्डलस्थम्। कीदृशं ? आदित्यवर्णम् आदित्यस्येव वर्णो यस्य तम्। तमेवादित्यं विदित्वा मृत्युमत्येति परब्रह्म गच्छति। सूर्यमण्डलान्तः पुरुषमात्मरूपं ज्ञात्वैव मुक्तिः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

योगमार्गेण सूर्यमण्डलस्थमात्मानं सम्प्रज्ञातसमाधिना ज्ञातुं शक्नोति।

यत्तु कैश्चित्—''योगे-योगे तवस्तरम्'' इत्ययं मन्त्रः योगपरकत्वेन लिखितः। तत्तु श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यम् अर्थविप्रकर्षात् इति मीमांसासूत्रानुसारेण कर्मकाण्डप्रकरणे अजाभिमन्त्रणे योगे-योगे इत्यस्य कर्मणि कर्मणि इत्यर्थत्वात् अस्य योगपरकत्वं चिन्त्यम्।

## उपनिषत्सु योगः

उपनिषत्सु योगसिद्धान्तानां प्रतिपादनं बाहुल्येन प्राप्यते यथा-योगशिखोपनिषद् नादबिन्दूपनिषद्, ध्यानबिन्दूपनिषद्, शांडिल्योपनिषद्, हंसोपनिषद्, मण्डलब्राह्मणोपनिषद्, ब्रह्मविद्योपनिषद्, श्वेताश्वतरोप-निषत्सु।

**योगशिखोपनिषदि** अहङ्कार एव सर्वानर्थानाम् मूलम्। अहङ्कारनाशे देहाध्यासादि दुःखानामपि नाशो स्वत एव। (हेयदुःखमनागतम्)

**नादबिन्दूपनिषदि** नादानुसन्धानेन विदेहमुक्तिलाभविशेषेण विवेचितम्।

**ध्यानबिन्दूपनिषदि**—योगाङ्गेषु षडंगयोगः, नाडीचक्रवर्णनम्, प्राणादिवर्णनं कुण्डलिनीप्रबोधेन मोक्षद्वारविभेदनम् मुद्राणां च वर्णनं विद्यते।

**शाण्डिल्योपनिषदि**—अष्टाङ्गयोगवर्णने दशविध-यमनियमान् वर्णनं विद्यते। चतुर्दशनाडीनां स्थानं, तासां नामानि, दशवायुस्थानम्, नाडीशोधनविधिः, प्राणायामः खेचरीमुद्रादीनां वर्णनं तत्र प्राप्यते।

**हंसोपनिषदि**—अत्र मनोलयेन ब्रह्मात्मप्रकाशः इत्येते मुख्याः विषयाः सन्ति।

**मण्डलब्राह्मणोपनिषदि**—चतुर्विधयमानाम्, नवविधनियमानाम् उल्लेखः कृतः। चतुर्विधयमेषु-शीतोष्णाहारः, निद्राविजयः, शान्तिनिश्चलत्वम्, इन्द्रियनिग्रहश्चैते यमाः कथिता। नवनियमेषु गुरुभक्तिः, सत्यमार्गानुरक्तिः, सुखानुगतवस्त्वनुभवः, तुष्टिः, निसंगता एकान्तवासो, मनोनिवृत्तिः, फलानभिलाषो, वैराग्यभावश्च, इत्येते नियमाः सन्ति।

**चतुर्थब्राह्मणे**—आकाशं, पराकाशं, महाकाशं, सूर्योकाशं परमाकाशमिति व्योमपञ्चकस्य ज्ञानं प्रदर्शितम्।

**कठोपनिषदि**—आत्मज्ञानोपायत्वेन योगसाधनायाः माहात्म्यं दर्शितम्।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**महाभारते योगः**

भगवता व्यासेन शुकदेवं प्रति यथा योगोपदेशः कृतः तस्य सम्यक् वर्णनं महाभारते मोक्षमर्धपर्वणि उपलभ्यते। तदनुसारेण योगी यदि परमात्मानं साक्षात्कर्तुमिच्छति तदा पूर्वं इन्द्रियाणि मनश्च वशीकृत्य बुद्धिसहितम् आत्मनि नियोजयेत्। अनेन योगी मुक्तम् अणोः अणीयसमं महत्तः महत्तरम् आत्मानं पश्यति। अस्मिन्नेव पर्वणि शुकदेवं प्रति स्थूल, सूक्ष्म, कारणं, इति शरीरत्रय भिन्नस्य जीवात्मानः तथा परमात्मनः साक्षात्कारसाधनायाः उपदिष्टाः। एवमेव पञ्चतन्मात्राणि सम्यक् साक्षात्कृत्य तदनन्तरं महेश्वरस्य योगैश्वर्यं ज्ञातुं समर्थाः भवन्ति। **एषा अवस्था सम्प्रज्ञातस्य वर्त्तते।**

मोक्षधर्मपर्वणि युधिष्ठिरं प्रति भीष्मपितामहेनापि योगशास्त्रतत्त्वानां पञ्चमहाभूतानि मनः, बुद्धिः, त्रैगुण्यादीनां वर्णनं कृतम्। मोक्षपर्वस्यैव षोडशाधिकत्रिशततमेऽध्याये लिखितमस्ति—याज्ञवल्क्येन जनकं प्रति योगसाधनाया उपदेशः कृतः—**नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्** अत्रैव समाधिनिष्ठ-योगयुक्तपुरुषस्य लक्षणानि निरूपितानि। योगस्य उच्चतमां स्थितिं प्राप्य योगी इन्द्रियजयी भूत्वा मनसः अविचलां स्थितिं प्राप्य समाधौ अविनाभावेन तिष्ठति न विचलितो भवति। एवं प्रकारेण योगी दीर्घकालाभ्यासात् पूर्णतः समाधिनिष्ठो भवति। एतेनैव मनीषिणः स्वस्वरूपं शुद्धचैतन्यस्वरूपं ज्ञात्वा कृतकृत्या भवन्ति। योगमार्गेणैव परमम् अव्ययपदं प्राप्तुं शक्यते।

**एतद्धि योगं योगानां किमन्यद् योगलक्षणम्।**
**विज्ञायतद्धिमन्यन्ते कृतकृत्या मनीषिणः॥** मो. पर्व, ३१६.२७

**श्रीमद्भागवते योगः**

श्रीमद्भागवते तृतीये स्कन्धे देवहूत्यै योगोपदेशं कृतम्। यमनियमादियोगसाधनैः अभ्यासपूर्वकं चित्तं एकाग्रं कुर्वन् परिमितभोजनं कुर्वाणः ब्रह्मचर्याऽभ्यासेन योगमहिमा निरूपिता। एकादशस्कन्धे सिद्धीनां विवेचनमस्ति सिद्धयः अष्टधा भवन्ति। एतासु तिस्रः सिद्धयः शरीरस्य सन्ति। आसां क्रम अयमस्ति—१. अणिमा, २. महिमा, ३. लघिमा, इति। इन्द्रियाणां एका सिद्धिः ४. प्राप्तिरस्ति। लौकिकान्-पारलौकिकान् पदार्थानाम् इच्छानुसारेण अनुभवकुर्वतो सिद्धिः ५. प्राकम्यं मायां तथा अस्याः कार्यजातान् इच्छानुसार-सञ्चालनम् ६. इशिता नाम्नी सिद्धिः विषयेषु निवसन्नपि तेषु अनासक्तभावः, ७. वशिता सिद्धिरस्ति। यम-नियम सुखं च कामयन् तस्य सीमापर्यन्तगमनं सा सिद्धिः। ८.कामावसायित्वमस्ति। इयं अष्टमी सिद्धिः वर्त्तते। एताः सिद्धयः श्रीकृष्णे स्वयमेव नित्यं तिष्ठन्ति। सूक्ष्माः सिद्धयः पातञ्जले विभूतिपादे वर्णिताः। तत्र जन्मौषधिमन्त्रतपः समाधिजा सिद्धयः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

श्रीमद्भागवते एकादशस्कन्धे त्रयोविंशतितमेऽध्याये लिखितमस्ति-

**दानं स्वधर्मो नियमो यमश्च।**
**श्रुतं च कर्माणि च सद्व्रतानि।**
**सर्वे मनोनिग्रहलक्षणान्ताः**
**परो हि योगः मनसः समाधिः ॥**

**श्रीमद्भगवद्गीतायां योगः**

श्रीमद् भगवद्गीतायां योगशास्त्रं पूर्णरूपेण विद्यते। यतो हि इदं परं ब्रह्मणः योग-योगेश्वरस्य श्रीकृष्णस्य मुखपद्मात् निःसृतम्। अस्य एकैकस्मिन् पदे योगस्य वर्णनम् उपलभ्यते। सम्पूर्णगीता कर्मयोगः भक्तियोगः ज्ञानयागेन त्रिधा विभज्यते, द्वितीयाध्याये स्थितप्रज्ञः योगी एव ब्रह्मपदं प्राप्नोति। **या निशा सर्वभूतानां.......**

बुद्धियुक्तो योगी कर्मजं फलं त्यक्त्वा जन्मबन्धनिर्मुक्तः अनामयं पदं गच्छति। **''निस्त्रैगुण्यो भवार्जुन''** इत्युक्त्वा भगवता गुणातीतावस्था वा उपादेयता इत्युपदिष्टम्। **तस्माद्योगीभवार्जुनः** इति वचनेन योगस्य दिव्यत्वं प्रतिपादितम्। **तृतीय-चतुर्थाध्याये** कर्मस्वरूपं कर्मणः बन्धनाशोपायः इत्यस्य विस्तृतं वर्णनं लभ्यते। योगसमाधिना एव कर्मबन्धनानि छिद्यन्ते।

**पञ्चमाध्याये**—जितेन्द्रिययोगी योगयुक्तोभुत्वा कर्माणि कुर्वन्नपि न कर्मफलैः बध्यते इति प्रतिपादितम्।

**षष्ठाऽध्याये**—ध्यानयोगः इति नाम्ना सुप्रसिद्धः, ध्यानयोगविधिः, युक्ताहारविहार आत्मसंयमः इत्येतेषां तत्त्वानां महत्त्वं प्रदर्शितम्।

**दशमेऽध्याये**—भगवता संकेतितः यत् प्रीतिपूर्वकं भजतां साधकानां बुद्धियोगं ददामि येन ते मामुपयान्ति, अत्र विभूतीनां विस्तरेण वर्णनं उपलभ्यते।

**एकादशोऽध्याये**—श्रीकृष्णेन विश्वरूपं प्रदर्शयन् निजयोगेश्वर्यस्य परिचयो दत्तः। (निर्माणचित्तम्)

**द्वादशोऽध्याये**—भक्तियोगस्य निरूपणं लभ्यते। अत्र ध्यानेन समाधिः लभ्यते।

**त्रयोदशाध्याये**—अत्र सांख्ययोगस्य प्रकृतिपुरुष इति तत्त्वद्वयस्य चर्चा लभ्यते, अत्र क्षेत्र-क्षेत्रज्ञयोः विभाजनं कृतम्। प्रकृतेरेव सर्वाणि कार्याणि करोति, पुरुषः अकर्ता एव। असङ्गोऽयं पुरुषः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**चतुर्दशेऽध्याये**—त्रयाणां गुणानां विस्तृतं वर्णनमस्ति। योगी देहसमुद्भवान् त्रीन् गुणानतीत्य जन्ममृत्युजरादु:खैः विमुक्तो अमृततत्त्वम् लभते। गुणातीतः योगी नि:त्रैगुण्यं प्राप्य परं ब्रह्मपदं प्राप्नोति।

**पञ्चदशेऽध्याये**—योगिनः शरीरस्थं सूक्ष्मतमं तत्त्वम् उत्क्रामन्तं स्थितं भुञ्जानं वा ज्ञानचक्षुषा पश्यन्ति। मुढाः न पश्यन्ति। (ऋतम्भराः तत्र प्रज्ञाः)

**षोडशेऽध्याये**—देवीसम्पदः आसुरीसम्पदश्च विवेचनमस्ति। योगदर्शनेऽपि क्लिष्टाक्लिष्ट-संस्काराणां निरूपणं लभ्यते।

**सप्तदशेऽध्याये**—वृत्तिभेदैश्च त्रिविधाहारस्य वर्णनं प्राप्यते। साधकाय परमोपादेयशरीरं वाङ्मयं मानसमिति त्रिविधानां तपसां वर्णनं लभ्यते।

**अष्टादशाऽध्याये**—कर्मफलत्यागस्य महत्त्वं निरूपितम्। अनिष्टम् इष्टम्, मिश्रितञ्च कर्मणां फलं भवति। अस्मिन्नैवाध्याये योगसाधकानां कृते पालनीयावश्यकतत्त्वानामपि सङ्केतं लभ्यते। एतेषु एकान्तसेवनं, मिताहारः, वैराग्यम्, अनहङ्कारः, कामक्रोधपरिग्रहादीनां त्यागः इत्येते मुख्याः सन्ति। एतेषां सम्यक् पालनेन योगी शान्तो, निर्ममोभूत्वा ब्रह्मभूपाय कल्पते। इत्थं गीतायां योगदर्शनं प्रतिपादितमस्ति।

**बौद्धधर्मे योगः**

भगवतो बुद्धस्य साधनाप्रणाली सांख्ययोगमतमनुसृत्यैव वर्त्तते। बौद्धदर्शने निर्वाणस्य मुक्तमार्गमयं कथितम्। यः केवलं स्वयमेव मुक्तो भवितुमिच्छति तस्य **अर्हत** इति संज्ञा वर्त्तते। अन्येषां मुक्तये प्रयताते सः **प्रत्येकबुद्धः** इति संज्ञको भवति। यश्च जगतः मोक्षाय चेष्टमानः स **बोधिसत्व** इत्यभिधीयते। एते मार्गाः क्रमेण अर्हतयान, प्रत्येकबुद्धयान, बोधिसत्वयान इति नामभिः स्वीक्रियते।

अत्र कुण्डलिनी मणिपूरकचक्रस्य निर्देशः कृतो वर्त्तते। अस्य चक्रस्य रुद्रदेवताध्यानं बौद्धाः अलौकिकेश्वररूपेण कुर्वन्ति। (शि. संहिता) हठयोगग्रन्थेष्वपि मणिपूरकचक्रस्य देवता रुद्रः एव। बौद्धमते चिन्तन एव ध्यानम्। ध्यानस्य चत्वारि सोपानानि सन्ति। १. आह्लादो, २. उल्लासः ३. वासनामभावः-आत्ममोहः। ४. आत्मसंयमस्य शान्तमुद्राः सा अवस्था सम्प्रज्ञातस्य वर्त्तते।

बौद्धमते प्रज्ञायाः सर्वोत्तमं स्थानं वर्त्तते, बौद्धदर्शने-अहिंसायाः प्रेम्णपन्था च विद्यते। तत्त्वबोधे बुद्धया यत्किमपि तत्त्वम् अधिगतं सा तुरीयावस्था एव। इमामेव बौद्धदर्शने विशुद्धप्रज्ञायाः स्थितिं मन्यन्ते।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

(दृश्यद्रष्टयोः एकास्मिता) (सोऽहम्-सोऽहम्) अतएव बौद्धधर्मस्य सर्वासु शाखासु योग एव प्राधान्येन अनुप्राणितो विद्यते।

**जैनदर्शने योगः**

जैनमतानुसारेण "युजिर् योगे" इति धातोः व्युत्पन्नः युज् इत्यर्थे प्रयुज्यमानः योगशब्दः। (योगभेदादिद्विंशिका ३०) अर्थात् मनो-वाक्-देहानां संयत् कुर्वाणो धर्मव्यापार एव योगः। अत्र सर्वाणि क्रियमाणानि धार्मिक-अनुष्ठानानि योगस्याङ्गानि। आचार्यहरिभद्रसूरिणा प्रोक्तं योगदृष्टिसमुच्चयग्रन्थे-**अतस्तु योगो योगानां योगः पर उदाहृतः-मोक्षयोजनभावेन सर्वसंन्यासलक्षणः।** जीवनमुक्तयोगीनां कृते मोक्षस्थितिप्राप्तिपूर्वकं मनोवाक्कायानां समस्तक्रियाणां निरोध आवश्यकम्। जैनागमे ध्यानोपरि विशिष्टं बलं प्रदत्तं, तच्चचतुर्धा वर्त्तते-

१. आर्तः २. रौद्रः ३. धर्मः ४. शुक्लः।

जैनधर्मे त्रिकाण्डात्मकस्य योगस्य उल्लेखः प्राप्यते, साधनायां श्रद्धाभवनं परमावश्यकम् इदमेव सम्यक्दर्शनम्। (श्रद्धवीर्यस्मृतिपूर्वकम् इतरेषां योगदर्शनम्)

जैनसाधनापरम्पारायां द्वादशभावानानां प्रतिपादनं विद्यते। तासु आद्याः षड्भावनाः वैराग्योत्पादिकाः। अन्तिमा षड्भावनाः, तत्त्वपरकाः सन्ति, प्रत्येकानाम् एकः सहजविकासः परिलक्ष्यते। १. अनित्य अशरणम्।

**ख्रीष्टतमे योगः** (ईसाईमते) ईसामहोलयेनापि उपदेशात् पूर्वं चत्वारिंशत्--दिवसानाम् उपवासो कृतः इति धर्मग्रन्थेषु लभ्यते। किञ्चित् कालपर्यन्तम् अरण्यवासोऽपि कृतवान्। ततः तपपरिचर्याः संलग्ना इति श्रूयते।

**रोमेनकेथोलिक** इति ग्रन्थे लिखितम्-उपवासः बलं ददाति। ईसामहोदयेन अनेकाः आश्चर्यजनक-घटनाः प्रदर्शिताः। करस्पर्शेन-कुष्टरोगिणां रोगमुक्तं कृतम्। जन्मान्धं मृत्पिण्डस्पर्शेन दृष्टिप्रदानं कृतम्। मृतपुरुषं जीवितं कृतम् एतादृशी सिद्धयः तेषां पार्श्वे आसीत्।

इति

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# अन्नं बहु कुर्वीत[1]

**डॉ. महेशदत्तशर्मा**

तैत्तिरीयोपनिषत्प्रमाणपुरस्सरम् आदौ परमात्मन आकाशः, आकाशाद् वायुः, वायोरग्निः अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः संभूतः।[2] स वा एष पुरुषोऽन्नरसमय[3] इति कथ्यते। बृहदारण्यकोपनिषत्प्रमाणेन यदा हि देवा अग्निस्वरूपायां सन्तप्तायां पृथिव्यां वृष्ट्या जुह्वति तदा तस्या आहुत्या अन्नं संभवति, यदा च दिव्यगुणोपेता याजका अग्निरूपात्मनि परमपुरुषे अन्नेन (घृतादिना) जुह्वति तदा तस्याः सकाशाद् रेतः (शुक्रं जलं वा) संभवति।[4] (यस्मात् पुरुषो जायते। अन्नाद् अन्नं जायते, ब्रह्मणि ब्रह्म वर्तत इत्यपि वा प्रकारान्तरेण वक्तुं शक्यते।) एतस्य आदित्यस्य (सूर्यस्य) रश्मिरन्नं भूत्वा सर्वासु प्रजासु प्रत्यवस्थित इति जैमिनीयोत्तरतापिन्युपनिषदि वचः।[5] यतो हि सूर्यस्य रश्मिपु सन्तप्तेषु सत्स्वेव मेघोऽनुजायते, मेघाद् वृष्टिः संभवति, वृष्ट्याश्च अन्नम् उत्पद्यते, यच्चेह कोऽप्यश्नाति पिबति वा स सूर्यस्य किरणैरेव तथाकर्तुं शक्नोति। भवन्ति च सूर्यस्य किरणास्तेजः स्वरूपाः। जठराग्नेश्च सूर्यकिरणैः सह संबन्धः। तेजसोऽग्नेर्वा अन्नं संभवति इति अर्थान्तरेण वक्तुं शक्यते। पूर्वं जलरूपेण स्थितेन तेन विधात्रा स्पृहा कृता यद् 'अहं बहुस्याम प्रजायेम च' इति छान्दोग्योपनिषदि वचनम्। तदा विधाता अन्नम् असृजत्। जलाद् अन्नं संबभूव।[6] तथ्यमिदं मनस्मृतौ प्रकारान्तरेणोपन्यस्तम् इति प्रतीयते। 'नारा' इति शब्दो जलस्य पर्यायत्वेन

---

१. तै. उप. २.१.१

२. तस्माद् वा एतस्मादात्मन आकाशः संभूतः। आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तै. उप. २.१.१

३. तत्रैव।

४. तस्मिन्नेतस्मिन्नग्नौ (पृथिव्यां) देवा वृष्टिं जुह्वति, तस्या आहुत्या अन्नं संभवति।................तस्मिन्नेतस्मिन्नग्नौ (पुरुषे) देवा अन्नं जुह्वति, तस्या आहुत्यै रेतःसंभवति। बृ. उप. ६.२.११.१२, तुलना–तै. उप. ३.७.१, ८.१ए, ९.१, छां. उप. ५.६.१–२, ५.७.१–२, गीता ३.१४

५. स एष एतस्य (आदित्यस्य) रश्मिरन्नं भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः। स यः कश्चाश्नाति एतस्यैव रश्मिनाश्नाति। जै. उप. १.९.२.६

६. ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति। ता अन्नमसृजन्त। तस्माद् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते। छां. उप. ६.२.४



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मनुस्मृतौ विद्यते। नारायामेव (जल एव) ब्रह्मणा प्रथम आश्रयः (अयनम्) प्राप्तः।[१] अतस्तस्य 'नारायणः' इति नाम लोके प्रसिद्धिं भेजे। तदनन्तरमेव तस्माद् नारायणाद् अनेकरूपा बहुकारकाः सृष्टिर्जाता।[२]

वैदिकवाङ्मये नैकेषु स्थलेषु अन्नम् ओषधिरूपेणोपवर्णितम्।[३] चन्द्रमाश्च ओषधीनामाधिपतिर्विद्यते[४], अतश्च स अन्नस्याप्यधिपतिः। अनेनैव कारणेन बृहदारण्यकोपनिषदि एतादृक् कथनं प्रतिष्ठते यद् य अमुं चन्द्रमसं (सोमम्) उपास्ते स सुतप्रसुतान्वितो भवति, न च तस्यान्नं कदापि क्षीयते।[५] अक्षय्यान्नप्राप्तये सोमः प्रार्थनीय इति भावः।

महाभारते निगदितं यत् प्राणानामधिपतिः पवनो मेघेपूर्ध्वं पदं सन्निधत्ते तदा तद् मेघगतं वारि शक्रः पृथिव्यामावर्तयति। सूर्यः स्वकिरणैर्भौमान् रसान् गृह्णाति, वायुदेवश्च सूर्यकिरणैः सन्तप्तान् तान् पुनः पृथिव्यां प्रवर्षति। इत्थं मेघगतं वारि यदा पृथिव्यां पतति तदा वसुन्धरा स्निग्धा भवति, ततः शस्यानि (अन्नादीनि) प्ररोहन्ति यैर्जगज्जीवति वर्तयते च। अन्नादेव शरीरे मांसमेदोऽस्थिशुक्राणां धातूनां सृष्टिः पुष्टिश्च जायते। एवंप्रकारेण सूर्यः, वायुः, जलम्, वीर्यं वा सर्वमेकराशित्वेन स्मृतम्, यस्य सर्वस्यान्नेनैव प्रसूतिः।[६]

अन्नसृष्टेरेतासु सर्वासु उपरिवर्णितासु प्रक्रियासु वस्तुतो नास्ति विशिष्टः कोऽपि भेदः। यतोऽन्नसृष्टेरयं विषयः क्वापि विस्तरेण क्वचिच्च लाघवेन सङ्ग्रथितः। परं मम मतेन अन्नसृष्टौ विधाता, आकाशः, वायुः, अग्निः जलम्, पृथिवी च इत्यादिकं सर्वकारणम्। सर्वेषां जीवानां शरीरे प्राणानामवधारणे उपर्युक्तात् कारणाद्

---

१. आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥
मनुस्मृतिः (द्वितीयसंस्करणम्, संस्कृति संस्थानम्, बरेली) अध्याय १, श्लोक १०

२. अत्र उपरिनिर्दिष्टाद् अग्रे मनुस्मृतिर्द्रष्टव्या।

३. तै. उप. २.२.१, मै. उप. ६.११

४. य ओषधीनां प्रभुर्भवति ताराधिपतिः सोमः। नृसिंह. उप. १.८
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः। गीता, १५.१३

५. स य एतम् (चन्द्रमसम्) एवमुपसतेऽहरहः सुतप्रसुतो भवति, नास्यान्नं क्षीयते। बृह. उप. २.१.३

६. मेघेषूर्ध्वं सन्निधत्ते प्राणानां पवनः पतिः।
तच्च मेघगतं वारि शक्रो वर्षति भारत।।
आदत्ते च रसान् भौमनादित्यः स्वगभस्तिभिः।
वायुरादित्यतस्तांश्च रसान् देवः प्रवर्षति॥
तद् यदा मेघतो वारि पतितं भवति क्षितौ।
तदा वसुमती देवी स्निग्धा भवति भारत॥
ततः सस्यानि रोहन्ति येन वर्तयते जगत्।
मांसमेदोऽस्थिशुक्राणां प्रादुर्भावस्ततः पुनः॥ महाभारतम् (गीताप्रेस, गोरखपुर) अनुशा. ६३.३६-३९

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ऋतेऽन्नमप्येकं महत् कारणम् अस्ति।[१] अस्मादेव कारणाद् अन्नं क्वचिद् देवतारूपेण, प्राणाश्च क्वचिद् अन्नमयत्वेन, अन्नं चाहोस्विद् मनोमयत्वेनोपनिबद्धम्।[२] एतेन एकमप्यन्नं नैकं रूपं भजते।

अथ भावनोपनिषत्प्रमाणेनान्नस्य भक्ष्यभोज्य-लेह्य-चोष्य-पेयात्मकमिति चतुर्विधत्वम्।[३] अन्तःकरणे (अन्तःपुरुषे) वैश्वानरो नामाग्निर्विद्यते यो हीदं भुङ्क्ते पचति च। शरीरस्थितमशितमन्नं त्रेधा त्रिधीयते। अस्य यत् स्थूलस्वरूपं तत् पुरीषं भवति, यद् मध्यमं तन्मांसम्, यच्चाणिष्ठं तन्मनो भवति।[४]

इदमन्नस्य माहात्म्यमधिकृत्य अस्माकं पूर्वोद्भवैर्मनीषिभिर्यदुक्तम् अनुभूतं च तस्यैव महाभारत-सदृशैर्महाकाव्यैः कालान्तरे व्यापकत्वेन बहुविधं व्याख्यानं प्रस्तुतमिति प्रतीयते, अतोऽत्र महाभारतपूर्वकालिकम् अन्नस्य सामाजिकं महत्त्वमुपनिबध्यते।

वैदिकवाङ्मयेऽन्नं साम्राज्यानामधिपतिः[५], प्रजानां पतिः[६], प्राणानां बन्धनम्[७], भगवतो विष्णोः (विराड्रूपेण वर्तमानस्यास्य विश्वस्य) भरणपोषणकारको विग्रहः[८], महः[९], दामः[१०], गौः[११], प्राणः[१२] इत्यादिर्भिनामिभिरुपवर्णितम्।

अनेकेषामधिपतीनामपि वलमन्ने प्रतिष्ठते। नष्टेऽन्ने तेषां सर्वं महत्त्वं क्षीयते। अत एव अन्नं साम्राज्यानामधिपतिः, राज्ञां च राजा। प्रजानां स्थितिरपि अन्नाश्रितैव। अन्नं जग्ध्वा नेत्राणि विकसन्ति इति

---

१. यदिदं किंचाश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तऽन्नम्। बृ. उप. ६.१.१४, अपि च द्र., छां. उप. ५.२.१
२. कतमौ तौ द्वौ इति। अन्नं चैव प्राणश्चेति। तुलना. बृह. उप. ३.९.८
अन्नं ह प्राणः शरणं ह वासः। ऐत. ब्रा. ७.१३.८
अन्नं सप्तहोता स प्राणस्य प्राणः। तै. आ. ३.७.३
अन्नं प्राणौ बहुर्भव। कौ. धर्मसू. ९२.१३
अन्नमयं हि सोम्य मनः। छा. उप. ६.५.४
३. भक्ष्यभोज्य-लेह्य-चोष्य-पेयात्मकं चतुर्विधमन्नं पाचयति। भावनोपनिषद् २
४. अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसम् योऽणिष्ठस्तन्मनः। छां. उप. ६.५.१
५. अन्नं साम्राज्यानामधितितन्मावतु। तै. सं, ३.४.५.१ पार. गृ. १-५.१०
६. अन्नं वै प्रजापतिस्तो ह वै तद् रेतः तस्माद् इमाः प्रजाः प्रजायन्त इति। प्रश्न. उप. १.१४, तुलना-तै. उप. २.२.१, तै. आ. ८.२.१
७. अन्नं प्राणस्य बन्धनम्। कौ. सूत्रम्, ८९.१० अन्नं प्राणेन संमितम् आप. श्रौ सू. ५.१८.२
८. विश्वभृद् वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नम्। मै. उप. ६.१३
९. मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। तै. उप. १.५.२
१०. अन्नं दाम। बृह. उप. २.२.१
११. अन्नं हि गौः। जै. उप. ३.१.३.१३
१२. कतमौ तौ द्वौ देवा इति। अन्नं चैव प्राणश्चेति। बृह. उप. ३.९.८, तुलना-तै. उप. २.२.१

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

लोकेऽनुभूतं सत्यम्, एतेनैवान्नं प्रजापतिः। पृथिवीजलतेजोवाय्वाकाशैः संरचिते शरीरे प्राणान् धारयितुं स्थिरीकर्तुं च अन्नमेव क्षमम्। इत इद 'प्राणस्य बन्धनम् प्राणेन संमितम्, इत्युक्तम्। भारतीयचिन्तनधारा प्रायेण ईश्वरस्थितौ विश्वसिति। अन्नरूपेणैव भगवान् सर्वान् प्रत्यक्षं पुष्णाति च। अतोऽन्नं भगवतो विष्णोः 'विश्वभृद्' इति रूपत्वेन स्वीकृतम्। नक्तन्दिवं सर्वे प्राणिनोऽन्नं कामयन्ते, तेषां चान्नेनैव महत्त्वं तिष्ठति। अत इदं 'महः' इति पदेनापि क्वचिद् अभिहितम्। प्राणा अन्नस्य बलप्रदाः, अन्नं च प्राणानां सहकारिणः। अत इमौ द्वावपि अन्योन्याश्रितौ स्तः, दीप्तिमन्तौ स्तः, तस्मात्तौ द्वावपि देवतारूपेण स्वीकृतौ। यथा एकस्मिन् मालासूत्रे नानाविधानि पुष्पाणि प्रोतानि भवन्ति तथैवास्मिन्नन्नसूत्रे सर्वेषां प्राणिनां नानावधिं गुम्फितं वर्तते, यतः सर्वे शरीरिण आमृत्योरन्नप्राप्तये (उदरनिमित्तात्) दोलायमाना भवन्ति, अतोऽन्नं क्वचिद् 'दाम' इति पदेन निर्दिष्टम्। यतोऽन्नं सर्वेन्द्रियेभ्यो बाह्याभ्यन्तरशक्तिप्रदम्, सूर्यरश्मिवत्तद् रसाद्युपभोगकरं पूजनीयं च, पृथिवी–गो–मातृवत्तस्मिन् सहिष्णुताया भरणपोषणयोश्च शक्तिर्विद्यते, अत इदं 'गौः' इत्यनेकार्थकेन पदेन निगृहीतम्। अन्ने नैकविशिष्टगुणानां विद्यमानत्वाद् इदं सर्वौषधिमयत्वेन स्वीकृतम्।[१] अन्नस्य माहात्म्यं व्यापकताम् अनिवार्यतां चोरसिकृत्वैव सूत्रकारैः—'अन्नं मांसवद् घृतवत् स्वधावद'[२] इति सूत्रं प्रणीय अस्य कृते सर्वातिशायि स्वरूपं प्रदत्तमित्यहं मन्ये।

यदा हि प्रथमपाण्डवेन युधिष्ठिरेण भीष्मपितामहाद् अन्नमाहात्म्यविषये पृष्टास्तदा तैर्मुनिनारदमुखाद् अधिगतोऽन्नमाहात्म्यविषयकज्ञानराशिर्नृपाय युधिष्ठिराय निवेदितः, यः खलु प्रशंसार्हः पूजनीयश्च वर्तते। तेषां मतेन देवा ऋषयश्च सर्वदान्नमेवाभिनन्दन्ति। सर्वाः संज्ञा लोकतन्त्रं च अन्न एव प्रतिष्ठते। अन्नं लोके ऊर्जस्करं वर्तते। अपरिमिता तृप्तिरन्नेनैव भवति। संसारेऽस्मिन् अन्नमेव शरीरं पुष्णाति, प्राणाश्चान्ने प्रतिष्ठिताः। इदं सर्वं विश्वमन्नेन धार्यते। गृहस्थाः, भिक्षवस्तासाञ्च सर्वेऽन्नेन जीवन्ति। सर्वेषां प्राणभृतां रक्षान्न देव भवतीति लोके सर्वत्र प्रत्यक्षदृष्टो व्यवहारः। क्षुत्क्षामप्राणिनेऽन्नदातैव प्राणदाता सर्वदाता चोच्यते। अन्नाभावे सन्ततेरभावः। अन्नादेव कामादिसकलाः क्रियाः सम्भवाः सन्ति। धर्मार्थप्राप्ती रोगशान्तिरन्नादुपजायते (धर्मार्थकामाः स्वास्थ्यलाभश्च सर्वेऽन्तर्निर्विष्टाः सन्तीति वचनान्तरेण वक्तुं शक्यते), यतः पृथिव्याकाशस्वर्गादयोऽन्नरूपा एव सन्ति, अन्नमेवैतेषाम् आधारः। अन्नं हि अमृतमिति सत्यं प्रजापतिमतम्। नष्टेऽन्ने शरीरस्थाः पञ्चधातवो भिद्यन्ते। अन्नहानौ महतां बलवतामपि बलं क्षीणतामुपैति। अन्नम् ऋते सर्वे निमन्त्रणामन्त्रणविवाहयज्ञज–पतपोऽध्ययनाध्यापनसम्मेलनादिकारम्भाः स्वयमेव निवर्तन्ते। एतत्सर्वं यत्किंचिद् दृश्यते तदन्नादेवेति

१. द्र., तै. उप. २.२.१
२. हिरण्य, गुह्य. २.१५.९

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सुनिश्चितम्।[१] अन्नाद् रक्तं शुक्रं च संभवति। अन्ने जीवः प्रतिष्ठते। अन्नेन इन्द्रियाणि पुष्णन्ति, बुद्धिश्च विकसति। अन्नं विना सर्वभूतानि सीदन्ति। तेजो बलं रूपं सत्त्वं वीर्यं धृतिर्द्युतिर्ज्ञानं मेधायुश्चेत्येतत्सर्वमन्ने प्रतिष्ठितं वर्तते। सर्वलोकेषु देव-नर-पक्षिणां प्राणाः सर्वदान्ने प्रतिष्ठिताः सन्ति। सुपमन्नं प्रजापतेः, सर्वेषामुत्पत्तिकारणम्, सर्वपूतमयं चास्ति। जीवश्चापि अन्नमयः। अन्नेनाधिष्ठिताः प्राणापानव्यानोदानसमानाः शरीरिणं धारयन्ति। सर्वाणि शयनोत्थानगमनग्रहणकर्षणरूपाणि कर्माणि अन्नादेव प्रवर्तन्ते। प्रजापतेः सृष्टौ चतुर्विधानि जरायुजाण्डजस्वेदजोद्भिजरूपाणि भूतानि अन्नात्संभवन्ति। सर्वे पावना यज्ञा विद्यालयाश्चिकित्सा-लयाश्चित्रालयाः कार्यालया अनाथालया अन्नात् प्रचलन्ति। रुद्रादयः सर्वे देवाः, पितरोऽग्रय, यक्षाः, रक्षांसि, ग्रहाः, नागाः, दानवाश्च अन्नेन तुष्यन्ति। अतः सर्वेष्वन्नं विशिष्यते।[२] अन्नं वै प्रथमं द्रव्यम्, अस्ति चान्नमेव प्रकृष्टा श्रीः।[३] एतादृगेव माहात्म्यमुररिकृत्वा पूर्ववैदिकैर्ऋषिभिर्यदुक्तं तद् अन्नस्य कालत्रितयेऽपि योग्यतां व्यनक्ति।[४]

लौकिके व्यवहारे दरीदृश्यते यद् एतज्जीवनम् उपार्जनेन संचयेन भक्षणेन वा परिसमाप्यते। परं चैतदपि एकान्ततया सत्यं यद् मानवेन नान्नम् अद्यते, अन्नमेव भूतानि अत्ति। तैत्तिरीयोपनिषद्युपन्यस्तमिदं वचनमत्रोक्तमेव दृढयति—

''अन्नाद् वै प्रजाः प्रजायन्ते............। अन्नाद् भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति।''[५]

वस्तुतः प्रजानाम् अन्न एवोत्पत्तिस्थितिविनाशानामन्तर्भावः। आजीवनं मनुष्योऽन्नप्राप्तये प्रयततेऽनुधावति परिभ्रमति च, तस्मादन्नं हि भूतानां ज्येष्ठम्। इहेदं य अन्नमुपास्ते स ब्रह्मोपास्ते। अन्न-ब्रह्मप्राप्तौ एव तस्य शरीरिणो भौतिकं सर्वं क्रियाजगत् परिसमाप्यते। अतः, 'अन्नं न निन्द्यात्' इति तैत्तिरीयोपनिषद्गतं वाक्यं व्याकुर्वन् आचार्यः शङ्करो लिखति—

''किं चान्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्तस्माद् गुरुमिवान्नं न निन्द्यात्। तदस्यैवं ब्रह्मविदो व्रतमुपदिश्यते। व्रतोपदेशोऽन्नस्तुतये, स्तुतिभाक्तं चान्नस्य ब्रह्मोपलब्ध्युपायत्वात्'' इति॥[६]

---

१. विस्तरेण द्रष्टव्यम्, महाभारतम्, अनुशासनपर्वं, अध्याय, ६३
२. तत्रैव, आश्वमेधिकपर्वणः ९२ तमेऽध्याये वैष्णवधर्मपर्वणि, ६
३. अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता। तत्रैव अनुशासनम् ६६.५९
४. अन्नस्य भूमा पुरुषस्य भूमा। अथ. सं. ५.२८.३
५. तै. उप. २.२.१
६. तै. उप. शाङ्करभाष्यम्, ३.६.७

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तैत्तिरीयोपनिषदः 'अन्नं न परिवक्षीत' इति वचसो व्याख्यानं आचार्यः शङ्करः पुनर्लिखति—

**अन्नं न परिवक्षीत न परिहरेद्**[१] इति।

एतेन प्रमाणेनान्नस्य ब्रह्मवत् स्तुतिभाक्त्वम् अपरिहणीयतां च सिद्ध्यति। उत्पादकोऽन्नोत्पादनाय सततं प्रयतते, परिश्रमं विदधाति तस्माद् उत्पादक एवोत्पादितस्यान्नस्य प्रथमोपभोक्ता भवेद् इति पूर्वकाले एषा लोकन्यायसिद्धवार्ता आसीत्। नूनमत्र अन्नपरिहर्ता ब्रह्मदोषभीतिरपि अन्नस्यापरिहार्यत्वे कारणत्वेन भवितुमर्हति। यदा कोऽपि कस्याप्यन्नं (शस्यम्) नश्यति स्म, तदैतस्मिन् अधर्मो परिकल्पित आसीत् राजा च तत्र न्यायकर्ता भवति स्म।[२] एतेन प्राचीनकाले सर्वे पुरुषाः स्वोदरपूर्तयेऽन्नोत्पादकाः कृतभूरिपरिश्रमाः स्वावलम्बिनश्चासन् इति प्रतीयते।

बहुधा संभाव्यते यद् वैदिके काले जना अन्नव्यापारकारिणोऽपि स्युः[३] ते च प्रदत्तान्नस्य विनिमयरूपेण प्रदत्तादन्नाद् मात्रायां (परिमाणे) किंचिदधिकमन्नं ग्रहीतारः स्यु (यथा अधुनापि अधमर्णायान्नं प्रदाय निश्चितकालावधि परिसमाप्ते सति सपादगुणान्वितं सार्धगुणान्वितं वा अन्नम् उत्तमर्णेन गृह्यते)। अन्नाभावे जगतः काश्चन क्रिया-योजना-परियोजनाः न परिचलन्ति, अतस्ते ऋषयोऽन्नोपलब्धयेऽन्नपतिं परमात्मनं सदा प्रार्थयन्ति। यथा—

**अन्नपते अन्नस्य नो धेहि** (मै. सं., २.१०.१, १३२.५)

**अन्नं वै मे यज्ञेन कल्पन्ताम्** (वा. सं. १८.१०)

**अन्नं नो धेहि बहुधा विरूपम्** (काठ. सं. ३८.१२)

**अन्नं च नो बहु भवेत्** (वष्णिुस्मृतिधर्मसूत्रम् ७३.३०)

तैश्च स्वकीयाः शिष्या अपि इत्थमेवोपदिष्टा यत् सर्वस्यापि मानवस्येदं पावनं कर्म यत् स सततपरिश्रमेण, येन केनापि उपायेन, उताहो यया कयापि विद्यया अधिकाधिकमात्रायामन्नं प्राप्नुयात्।

**यया कया च विद्यया बह्वन्नं प्राप्नुयात्** (तै. उप. ३.१०.१)

आसृष्टेमर्नुष्याणामियमन्नविषयिणी गुर्वी समस्या। प्रारम्भे यादृशीयं जागर्ति स्म साम्प्रतं ततोऽपि गरीयसी विद्यते। राष्ट्रस्य बहुविधा उन्नतिः खाद्यान्नमधितिष्ठति। अन्नाल्पताप्रभावो राष्ट्रस्य आभ्यन्तरशासन-

---

१. तत्रैव, ३.८.१

२. अन्नं मा मा हिंसी। कैशिकसूत्रम् १३६.४
सस्यविनाशेऽधर्मश्चैव राजभयं च। महाभाष्यम् १.४.२७, तुलना–तै. ब्रा. ३.१.२.१०

३. अन्नमन्नं विरोहतु। तुलना अथ. सं. १०.६.३३

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

व्यवस्थायां वैषम्यमुदेति, परं तद् राष्ट्रं परराष्ट्रस्य कृपापात्रं भूत्वा आत्मसम्मानाद् गौरवाच्च नीचैः परिपतत् चिराय च तस्य ऋणीभवति, ऋणाच्च मोक्षः परराष्ट्रस्य पराधीनतास्वीकरणेनैव संभवः।

अतोऽहं निजदेशवासिजनान् विशेषेण कृषकान् प्रबोधयामि यद् यदा अस्मिन् कृषिप्रमुखेऽपि देशेऽन्नस्य न्यूनता तिष्ठेत् तदा इयं महापमानकारिणी लज्जाकारिणी च स्थितिर्वर्तते। अस्ति च भारतीयानां महाभारतं प्रधानं ग्रन्थरत्नम्। अस्मिन् ग्रन्थे आदर्शः प्रस्तुतास्तेऽद्यापि अनुकरणीया ग्राह्याश्च। भारतं कृषिकर्मप्रमुखमिति महाभारतकालीना मान्यता। व्यासः कथयति यद् यो नेता स्वहस्तैः कृषिं न करोति, क्षेत्रं न कर्षति वपति वा स नेतृत्वेन समितिं गन्तुं नार्हति।

न नः समितिं गच्छेद्, यश्च नो निर्वपेत् कृषिम्॥[1] (महा. उद्यो. ३६.३.१)

सत्यं चेदम्। कृषकाणां वास्तविको नेता कृषक एव भवितुमर्हति। कृषिकर्मणः परतरः, आसनलोलुपः सततवावदूको नेता कृषकाणां किमपि प्रियं कर्तुं मङ्गलं च विधातुं कदापि नैव समर्थो नार्हश्च।[2]

अतः प्रथमम् ऋषिभिः 'अन्नं बहु कुर्वीत' (तै. उप. ३.९.१) इत्यनेन महता उद्घोषवाक्येन यथा शिष्या उपदिष्टा आसन्, यस्य च परिपालनं महाभारतकालेऽपि समजायत, तथैव तद् व्रतमानुष्ठातुं राष्ट्रोन्नतिं परिलक्ष्य साम्प्रतम् अस्माभिः सततमन्नोत्पादनवृद्धये प्रयासः करणीयः, विश्वेऽस्मिन् च गौरवः प्राप्तव्यः, अयमेव चास्माकं प्रमुखं धर्मो भवेत्। अन्नाधिक्येनैव च भारतं जगतीतले भारतं पूजार्हं च भविष्यति, नान्यः कोऽपि निरुपद्रवो मार्गो जगच्छिखरमारोढुम्। अपि च, अस्माकं पूर्वप्रधानमन्त्रिणा श्रीलालबहादुरशास्त्रिणा स्वशासनकाले या ''हरितक्रान्ति'' रूपा बह्वन्नोत्पादनाय कल्याणकारिणी योजना उद्घोषितासीत् तस्या मूलम् ''अन्नं बहु कुवीत'' इत्यस्मिन्नेवोपनिषदि वचने सुप्रतिष्ठितं दृश्यते।

---

१. इदं कथनं बलदेव उपाध्यायः महोदयसंमतम्। द्र. संस्कृत साहित्य का इतिहास, वाराणसी, १९६५, पृ. ९५, परन्तु महाभारते (गीताप्रेस गोरखपुरसंस्करणे) तु साम्प्रतमधोलिखितः श्लोकपाठः प्राप्यते—न नः समितिं गच्छेद् यश्च नो निर्वपेत् पितृन्। महा. उद्यो. ६.३३

२. तत्रैव।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# संज्ञानात्मकप्रक्रिया

डॉ० मीनाक्षी मिश्र

मानवः यस्मिन् वातावरणे निवसति तस्मिन्नसंख्यानि एतादृशानि तत्त्वानि भवन्ति यानि उत्तेजनां प्रस्तुतवन्ति। एतादृशाः उत्तेजनां प्रति मानवाः आकृष्टाः भवन्ति। उत्तेजनोपस्थापनतत्त्वं, घटना, परिस्थिति वा **उद्दीपकनाम्ना** ज्ञायते। एतान् उद्दीपकान् प्रति सर्वे मानवाः समानरूपेण आकृष्टाः न भवन्ति। उद्दीपकान् प्रति अनुक्रियायुक्ताः मानवाः स्वकीयानां मूलप्रवृत्तीनां, मानसिकशारीरिकावस्थयोः, संवेगात्मक-सामाजिकपरिस्थित्योः चानुरूपेण कुर्वन्ति। प्रतिमानवस्य अवस्थाः दशाश्च भिन्नाः भवन्ति अतएव उद्दीपकान् प्रति आकर्षणे अनुक्रियासु च व्यक्तिगतभिन्नतानां प्राप्तिः भवति। मानवाः उत्तेजनाः स्व स्व दशानुरूपेणावश्यकतानुरूपेण च गृह्णन्ति एवञ्च ताः प्रति मनोशारीरिकव्यवहाररूपेण (यथा-शारीरिक-वाचिक-संवेगात्मक-क्रियादिरूपैः) प्रतिक्रियां कुर्वन्ति। इयं प्रक्रिया केन प्रकारेण घटिता भवति ? सामान्यतः इमं प्रति जनानां चैतन्यं न भवति। वस्तुतः इयं प्रक्रिया तदा एव घटिता भवति यदा तेषामुद्दीपकानां ज्ञानं मानवेषु भवेत्, अर्थात् सर्वेषां सन्दर्भितसङ्केतानाम् उपलब्ध्यवसरेणैव प्रत्यक्षीकरणं सरलं भवति, येन उद्दीपकानां विषये पूर्वानुभवाधारेण तात्कालिकज्ञानस्य प्राप्तिः भवति। वातावरणेन उद्दीपकसंकेतं मानवः स्वीयैः पञ्चज्ञानेन्द्रियैः गृह्णाति। संकेतानां सूचनानां वा संसाधनप्रक्रियां निम्नप्रदर्शितैः रेखाचित्रैः प्रस्तुतकर्तुं शक्यते-




रेखाचित्रम् १ सूचना संसाधनमार्गः



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रदर्शितेन रेखाचित्रेनेदं स्पष्टरूपेण परिलक्षितं भवति, यत् मानवः स्वीयं वातावरणं प्रति संवेदनशीलोऽस्ति, तं प्रति अनुक्रियां च करोति। यदा ज्ञानेन्द्रियाणां माध्यमेन मानवः बाह्यवातावरणाद् उद्दीपकानां पूर्वानुभवाधारेण तेषां रूप-गुण-नाम-संवेदनादिसन्दर्भे किमपि ज्ञानं लभते तदा ज्ञानग्रहणस्य इयं प्रक्रिया—''**प्रत्यक्षीकरणम्**'' इति कथ्यते। प्रत्यक्षीकरणे संवेदनायै अर्थः प्रदीयते। इयं प्रक्रिया तदैव घटिता भवति यदा तस्याः संवेदनायाः किञ्चित् पूर्वज्ञानं जनेषु स्यात्। परं यदा वातावरणस्य सङ्केतचिह्नानि, प्रत्यक्षीकृतोद्दीपकानां विशेषताः संवादी न भविष्यन्ति तदा जनेषु प्रत्यक्षीकरणं कठिनं भविष्यति एवञ्च तात्कालिकज्ञानस्यापि प्राप्तिः न भविष्यति। यदा कोऽपि उद्दीपकः ज्ञानेन्द्रियाणां सम्पर्के समागच्छति तदा तत्सम्बन्धितः ज्ञानेन्द्रियः प्रभावितो भवति तथा च उद्दीपकानां सूचना कस्यापि ऊर्जायाः रूपे तं निकषा गच्छति, तदनन्तरं ज्ञानेन्द्रियाणां स्नायुतन्त्रेषु रसायनसम्बन्धितानि परिवर्तनानि भवन्ति, इमानि स्नायोः आवेगरूपे मस्तिष्कं प्रति गच्छन्ति। मस्तिष्के स्नायो आवेगानां प्राप्त्यनन्तरं पूर्वानुभवैः जनेषु संज्ञानं भवति।

संज्ञानस्य तात्पर्यम् अनया प्रक्रियया भवति यस्यां संवेदन-प्रत्यक्षीकरण-प्रतिमा-धारण-प्रत्यस्मरण-चिन्तन-तर्क-समस्यासमाधान-सदृशाः मानसिकप्रक्रियाः सम्मिलिताः भवन्ति। अतः संज्ञानशब्दस्य तात्पर्यं भवति यथा Neisser(1967) महोदयेनापि भणितं वर्तते[१]—**संवेदीसूचनानां** (sensory information) ग्रहण कृत्वा तेषां रूपान्तरणेन (transformation) **विस्तरेण** (elaboration) **संग्रहणेन** (storage) **पुनर्लाभेन** (recovery) एवञ्च समुचितप्रयोगेन भवति। अतः संज्ञानात्मकविकासस्य तात्पर्यं बालकेषु केषामपि सूचनानां ग्रहणं कृत्वा तेषामुपरि चिन्तनेन क्रमशः योग्यतोत्पादनेन भवति अस्याः प्रयोगं विविधपरिस्थितिषु सम्पाद्य सः विविधसमस्यानां समाधानं सारल्येन कर्तुं शक्यते। संज्ञानात्मकविकासस्य अध्ययने महत्त्वपूर्णानि कार्याणि (Piaget, Bruner, Asubel) इत्यादि महोदयानां कृतानि वर्तन्ते। विगतवर्षेषु संज्ञानात्मकविकासः संज्ञानात्मकप्रक्रियाश्च जनान् आकृष्टवती। संज्ञानात्मकमनोवैज्ञानिकाः जटिलासु मानसिकक्रियासु अधिकां रुचिं च प्रदर्शितवन्तः। ते केवलं निरीक्षणयोग्याः मानसिकक्रियाः यावत् सीमिताः न सन्ति प्रत्युत मस्तिष्के स्नायुतन्त्रेषु च घटितां प्रक्रियां प्रति स्वीयं ध्यानं स्थापयन्ति एवञ्च महत्त्वपूर्णतथ्यानां प्रकाशनेऽपि दत्तावधानाः सन्तिः।

Houston, Bee & Rimm (1983) महोदयाः संज्ञानस्य सन्दर्भे मनोवैज्ञानिकानां निम्नलिखितान् पञ्चलोकप्रियदृष्टिकोणान् प्रदर्शितवन्तः[२]—

---

१. सिंह अरुणकुमार ''शिक्षा मनोविज्ञान'', पटना, भारती भवन पब्लिशर्स, प्रथमसंस्करण, पुनः मुद्रितः १९९८ पृ.१७१

२. श्रीवास्तव रामजी, ''संज्ञानात्मक मनोविज्ञान'', दिल्ली, मोतीलाल बनारसी दास, प्रथम संस्करण, २००३, पृ. १-३

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

१. **सूचनासंसाधनरूपे संज्ञानम्** ( Cognition as Information Processing ) केचन मनोविज्ञानपण्डिताः संज्ञानं पूर्णरूपेण सूचनासंसाधनस्य प्रक्रिया वर्तते इति मन्यन्ते। एतेषां मतानुसारेण 'संज्ञानम्' इति समावेशी शब्दोऽस्ति। शब्दोऽयं ताः प्रक्रियाः प्रति संकेतयति येन सांवेदिकनिवेशस्य रूपान्तरणं, न्यूनीकरणं, विस्तरणं, संग्रहणं, पुनर्प्राप्तिः, अनुप्रयोगश्च भवति। एते संज्ञानात्मकमनोवैज्ञानिकाः चिन्तनं सूचनासंसाधनस्य प्रकार्यं वर्तते इति भणन्ति।

२. **मानसिकप्रतीकानां प्रहस्तलनरूपे संज्ञानम्** ( Cognition as Manipulation of Mental symbols )—केचन मनोवैज्ञानिकाः संज्ञानात्मकप्रक्रियाः मानसिकप्रतीकानां प्रहस्तलनरूपे स्वीकुर्वन्ति। यतोहि प्रतीकेषु प्रतिनिधित्वकरणं समुपलब्धं भवति, अतः यदा वयं कस्यापि वस्तुनः प्रतीकात्मकशब्दस्य प्रयोगं कुर्मः तदा तस्य वस्तुरूपे उपस्थित्याभावेऽपि पूर्वानुभवस्य आधारेण प्रतीकानामर्थमवगच्छन्ति।

३. **समस्यासमाधानरूपे संज्ञानम्** ( Cognition as Problem Solving Process )—केचन कथयन्ति यत् संज्ञानं ताः प्रणालीन् प्रति सङ्केतयति याभिः समस्या-समाधानाय सूचनानां संकलनम् उपयोगश्च भवति। एतेषां मतानुसारेण समस्यासमाधानम् एका संज्ञानात्मकप्रक्रिया वर्तते।

४. **चिन्तनरूपे संज्ञानम्** ( Cognition as thinking ) —चिन्तनमपि एका संज्ञानात्मकप्रक्रिया वर्तते इति केचन वदन्ति। चिन्तने विविधानां मानसिकक्रियाणां समावेशोऽस्ति।

५. **ज्ञानप्राप्तिः, स्मरणं, प्रत्यक्षीकरणं, चिन्तनं, निर्णयः, समस्या-समाधानं, तर्कः, अधिगमः, कल्पना, सम्प्रत्ययीकरणं, भाषाप्रयोगादिरूपेषु संज्ञानम्** ( Cognition as knowing, Remembering, Preceiving, Thinking, Judging, Problem Solving, Reasoning, Learning, Imagining. conceptualising and using language. )—अस्योपागमस्यानुसारेण संज्ञानस्य विषये विचारकरणस्य सर्वोत्तमं प्रकारमस्ति यद् अस्मिन् समस्ताः मानसिकघटनाः सम्मिलिताः कुर्यात्।

एतेषां पञ्चोपागमानाम् अवलोकनेन तथ्यस्यास्य उपरि प्रकाशं पतति यत् संज्ञानोपरि विचारावसरे ते सर्वेऽपि उपागमाः परस्परं भिन्नाः न सन्ति, अपितु केषाञ्चित् प्रमुखानां गुणानामुपरि एते बलं प्रदर्शयन्ति। एवं प्रकारेण इदं कथितुं शक्यते यत् संज्ञाने विविधाः मानसिकप्रक्रियाः सन्निहिताः सन्ति, यस्मिन् सूचनानां ग्रहणं, संग्रहणप्रणाल्यां तेषां स्थापनं, तेषां पुनर्प्राप्तिरथवा तेषां सूचनानामुपयोगस्य आवश्यकताः स्थिता भवति। केचन मनोवैज्ञानिकाः संज्ञानम् एवं प्रकारेण परिभाषन्ति यत् 'संज्ञानं' प्रत्यक्षीकरणस्य, स्मृतेः सूचनासंसाधनस्य च ताः मानसिकप्रक्रियाः प्रति सङ्केतं करोति येन व्यक्तिः ज्ञानं लभते, समस्यायाः समाधानं करोति एवञ्च भविष्ययोजनाः निर्माति।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

संज्ञानात्मकप्रक्रिया: वस्तुतोऽप्रेक्षणीया: मानसिक क्रिया: भवन्ति, याभि: सूचनानां प्रहस्तलनं भवति। अन्यानां प्रक्रियाणां सदृशैव संज्ञानात्मकप्रक्रिया अपि काञ्चन निष्कर्षान् परिणामान् (cognitive products) च जनयन्ति। एते संज्ञानोत्पादकपदार्था: निष्पादनमाध्यमेन व्यक्ता: भवन्ति अथवा भविष्ये प्रयोगाय पुन: संसाधिता भवन्ति।

वर्तमाने छात्राणां संज्ञानात्मकप्रक्रियाणां सन्दर्भेऽनेकान्यध्ययनानि प्रचलितानि विद्यन्ते। संज्ञानात्मकप्रक्रियाणामध्ययनात् प्राक् द्वयो: सामान्यनियमयो: ज्ञानमत्यावश्यकं वर्तते, यतोहि नानाविधासु परिस्थितिषु एतौ एव द्वौ नियमौ संज्ञानात्मकप्रक्रियाणां सुसंगतं विवरणं प्रतिपादयत:। एवञ्च शोधात् प्राप्तनिष्कर्षाणां स्पष्टीकरणस्य औचित्यप्रदाने सहायकौ स्त:। छात्राणां संज्ञानात्मकवरीयतासु, पाठ्यक्रमे, शिक्षणे, अधिगमे च व्याप्तसम्बन्धानां प्रदर्शने सहायतां प्रददत:। एतौ नियमौ निम्नलिखितौ स्त:[१]—

१. **कस्यापि सूचनाया: कृते संज्ञानात्मकप्रक्रमा: ( Cognitive Processing ) प्रयुक्ता: भवितुं शक्यन्ते**—सूचना: कस्मिन्नपि रूपे भवितुं शक्यन्ते यथा—चित्रं-शब्दावली-कथा-अभिप्रेरकघटना:-कार्ययोजना इत्यादि। अस्य नियमस्य अभिप्राय: अयमस्ति यत् शैक्षिकोद्देश्यानां प्राप्तये छात्राणां संज्ञानात्मकप्रणालि: न केवलं पाठ्यक्रमे सन्निहितानां विविधप्रकारकाणां सूचनानां संसाधने सक्षमा: वर्तते अपितु शिक्षणक्रियाया प्राप्तसूचनानां संसाधनेऽपि सक्षमा अस्ति। अत: कस्यापि एकस्य स्वीकृतस्य गृह्णन्ति, अधिगमं, कुर्वन्ति, एवञ्च केन प्रकारेण '**संज्ञानात्मक-व्यूहरचनानां**' (cognitive stratagies) निर्माणमुपयोगञ्च कुर्वन्ति, कथञ्चार्जितज्ञानस्य प्रेरकाणाञ्च अभिव्यक्तिं कुर्वन्ति।

२. **परस्परताया: नियम:**—अस्य नियमस्यानुसारेण छात्राणां संज्ञानात्मकप्रक्रिया: न तु केवलं वातावरणस्य घटनां प्रति अनुक्रिया एव सन्ति एवञ्च एता: तासां निष्पत्ते: पूर्णतया आन्तरिकनिर्धारका अपि न भवन्ति। '**पूर्वघटनानां प्रभाव: भावीघटनानां कारणञ्च**', एतयो: द्वयो: रूपयो: संज्ञानं परिभाषितं भवति। अनुदेशनात्मकस्य वातावरणस्य घटनानां, छात्राणां संज्ञानात्मकप्रक्रियाणाञ्च मध्येऽन्योन्याश्रय: सम्बन्धोऽस्ति एवञ्च समयानुसारेण एतौ परस्परं सुगठितं कुरुत:। पारस्परिकताया: अस्य नियमस्य द्वौ महत्त्वपूर्णौ निहितार्थौ स्त:—

१. छात्रा: शिक्षणप्रक्रियाया: निष्क्रियप्राप्तिकर्ताभावेन स्थिता: न भवितुं शक्यन्ते।

२. अध्यापक: छात्राणां निष्पत्ते एकमात्रकारणमस्ति इति कथितुं न शक्यते।

---

1. Wine P.H. 'Cognitive processing in the classroom' The International Encyelopedia of Ed. Hussain & Postlethwaite, Pergaman press, First Edition, 1985 p. 796

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अस्य नियमस्य अभिप्रायोऽयमस्ति यत् छात्राणां निष्पत्तिः अनुदेशात्मके वातावरणे छात्राणामध्यापकानाञ्च अन्तःक्रियायाः गत्यात्मकेन प्रवाहेन प्रभाविता भवति। अध्यापकाः सूचनाः कक्षायां प्रस्तूयन्ते एवञ्च छात्राः तासां प्रत्यक्षीकरणं कृत्वा स्वीयाभिः संज्ञानात्मकप्रक्रियाभिः ज्ञानार्जनं कुर्वन्ति। छात्राणां कक्षागतानां संज्ञानात्मकप्रक्रियाणां वर्णनम् अग्रे दर्शितस्य प्रतिमानस्य सहयोगेन कर्तुं शक्यते[1]—

कक्षायाः वातावरणम्




संज्ञानात्मकप्रणाली

| संवेदनप्रणाली | | | अनुक्रिया-प्रणाली |
|---|---|---|---|
| स्मृति-प्रणाली | | संक्रियात्मक-प्रणाली | |
| | | | प्रक्रियाः |
| कार्यात्मकस्मृतिः | विषयवस्तु | विषयवस्तु | अवधानम् |
| (STM) | संप्रत्ययः | उद्देश्यः | संकेतनम् |
| स्थायी-स्मृतिः | प्रतिज्ञप्ति | योजनाः | अभ्यासः |
| (LTM) | रूपरेखा | | साहचर्यात्मकं संयोजनम् |
| | | | यथार्थज्ञानम् |

**रेखाचित्रम् २ कक्षायाः वातावरणे संज्ञानात्मक-प्रणाल्याः प्रतिमानम्**

1. Wine P.H. 'Cognitive processing in the classroom' The International Encyclopedia of Education, & Postlethwaite, Pergaman press, First Edition, 1985 p. 796

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अस्मिन् प्रतिमाने संज्ञानात्मकप्रणाल्याः त्रयपक्षाः प्रदर्शिताः विद्यन्ते। प्रथमः पक्षः स्थिरः पक्षोऽस्ति। अस्मिन् विविधस्तरीयाः सूचनाः भवन्ति, यासु संज्ञानात्मकं कार्यं भवति। द्वितीयः पक्षः गत्यात्मकोऽस्ति, यस्मिन् संज्ञानात्मकप्रणाली तासां प्रकार्याणि च भवन्ति। एवञ्च तृतीयाः पक्षः प्राचलः (Parameter) वर्तते, यः संज्ञानात्मकपरिक्रियाप्रणाल्याः परिसीमानां वर्णनं करोति।

पूर्वकथिताभ्याम् उभाभ्यां नियमाभ्याम् एवञ्च प्रतिमानम् (द्वितीयं रेखाचित्रम्) इदं स्पष्टमस्ति यत् छात्राणां संज्ञानात्मकप्रणाली कक्षायाः वातावरणे एवञ्च तेषां मानसिकक्षमतानाञ्चोपरि निर्भरा भवति। छात्राः स्वक्षमतानुरूपैः वातावरणात् सूचनाः गृह्णन्ति एवञ्च ताः संसाध्य संज्ञानं प्राप्नुवन्ति। येन प्रकारेण सूचनाः गृहीताः संसाधिता च भवन्ति, सैव प्रकासः **संज्ञानात्मकशैली** (Congitive style) इति कथ्यते। यथा—

Congnitive styles can generally be described as the manner in which information is accquired & processed."[1]

"Cognitive style is the term used to describe different ways in which people process information, including perception, storage, transformation, and utilization of processes of perceiving and thinking which are qualitatively distinct, Cognitive style differes from ability in that it is typically described in terms of contrastin poles, rather than as a single dimensios. It is also thought to be associated with personality, affective, and motivational characteristics like ability, however it is considered to be relatively stable, being consistent actoss both time & task,"[2]

अतः **'संज्ञानात्मक-शैली'** इति विदुषां मते एकः स्थिरगुणः वर्तते यस्याः सम्बन्धः व्यक्तेः व्यक्तित्वेन, योग्यतया, भावात्मकपक्षैश्च भवति। विंशतिशताब्द्याः मध्ये संज्ञानात्मकविकासेन बुद्धिना सम्बन्धितेन च विविधानां सिद्धान्तानां प्रतिपादनादनन्तरं संज्ञानात्मकक्षेत्रस्य विविधेषु आयामेषु कार्याणि अभवन्। येषु संज्ञानात्मक-शैली अपि प्रमुखरूपेण सम्मिलिता आसीत्।

---

1. John W. Hansem 'Students Cognitive Styles in Postseconary Technology Programs' Digital Library and Archives (form world wide web)
2. N.J. Entwistle 'cognitive style and Learning' The International Encyclopedia of Education Ed. Hussain & Postlethwaite, Pergaman press, First Edn. 1985 p 810

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# वेदों में ऋत और यज्ञ का अन्तःसम्बन्ध

डॉ. राजेश्वर मिश्र

वैदिक वाङ्मय में सृष्टि के विकास की कथा और यज्ञ के विकास का स्वरूप-दोनों निरन्तर गतिशीलता और परिवर्तन की प्रक्रिया से परिपूर्ण परिलक्षित होते हैं। जिस प्रकार सृष्टि के विकास में अनेक तत्त्वों का सम्मिश्रण और अनेक विचारधाराओं का सम्मिलन दृष्टिगोचर होता है उसी प्रकार यज्ञ के विकास की परम्परा में भी अनेक रूप में मानी गई है। यदि हम यज्ञ को सृष्टि-प्रक्रिया का रूपक कहें तो अनुचित नहीं होगा। विश्व की नियामक शक्ति के रूप में 'ऋत' की कल्पना[१] और ऋत को यज्ञ का स्वरूप[२] तथा यज्ञ को ऋत का कारण मानना[३] यज्ञ को ही रूपायित करना है। दोनों का एक दूसरे के साथ तादात्म्य इस बात का द्योतक है कि प्रारम्भ में वैदिक मनीषियों ने सम्पूर्ण सृष्टि विधान को एक अलौकिक यज्ञ मानकर उसे इस स्थूल जगत् में यज्ञ के रूप में रूपायित करने का प्रयास ही नहीं किया अपितु उस अलौकिक विधान में इस यज्ञ-विधान को सहायक अथवा परस्पर पूरक माना।

सार्वभौम सत्ता के रूप में ऋषियों ने 'ऋत' की प्रतिष्ठा की, क्योंकि इसका उद्भव ब्रह्मा के महान् तप से हुआ[४] और उसके उत्पन्न होने के पश्चात् ही रात्रि, समुद्र, संवत्सर, दिन, सूर्य, चन्द्र, द्यौ आदि लोक उत्पन्न हुए।[५] ऋत ही निखिल सृष्टि का नियामक बना, उसी के मात्र से सृष्टि की समस्त प्रक्रिया चलती है। इसलिए समग्र सृष्टि को ऋत के अन्तर्गत माना गया है।[६] जगत् की तीन शक्तियाँ-सूर्य, चन्द्र, अग्नि उसी ऋत (सृष्टि रूप यज्ञ) के मार्ग का अनुसरण करते हैं[७] तथा सर्ग के आदि में ब्रह्मौदन यज्ञ की वेदी उसी (सृष्टि के अटल नियम) के अनुसार बनाई गई थी।[८] प्रकृति के समस्त विधान उसी पर आधृत माने गये। उषा का

---

१. ऋ., ५.६३.७; यजु; ११.४७; शत. ब्रा.,६.७.३.११ ऋतमिति सत्यमित्येतद्बृहदिति; वही, ४.१.४.१०: ब्रह्म वा ऋतम् ; ऐ.ब्रा.,४.२०; जैमि. उप.,३.३६.५: ओमित्येतदेवाक्षरमृतम्।
२. मैत्रा. सं., १.१०.१२: ऋतं वै सत्यं यज्ञः।
३. शत. ब्रा., १.३.४.१६: यज्ञो वा ऋतस्य योनिः, ऋ.,५.६३.७: ऋतेन विश्वं भुवनं विराजते।
४. ऋ.,१०.१९०.१: ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत। तुलनीय-तै.आ.,१०.१.१३.
५. वही, १०.१९०.१-३ (सम्पूर्ण सूक्त)।
६. वही, १०.९२.४: ऋतस्य हि प्रसितिर्द्यौरुरू व्यचो------।
७. अथर्व. ८.९.१३: ऋतस्य पन्थामनु तिस्र आगुस्त्रयो धर्मा-----।
८. वही, ११.१.२३: ऋतेन तष्टा मनसा हितैषा ब्रह्मौदनस्य विहिता वेदिरग्रे।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नर्तन, आदित्य का उदय-अस्त, रात-दिन आदि जो भी इस सृष्टि से सम्बद्ध है, सभी ऋत पर आधारित माने गए हैं।[१] उसी ऋत को यज्ञ का स्वरूप माना गया, जिससे समस्त देवताओं का भरण-पोषण होता है और जिसके कारण सृष्टि का विकास होता है।[२] यदि 'ऋत' को जल मान लिया जाय तो भी वेदों में जल को सृष्टि का आदि कारण माना गया है, क्योंकि सर्गरचना से पूर्व यह सब चिह्नरहित जल ही था।[३] और अग्नि को इसका प्रथम पुत्र कहा गया,[४] जिसका सम्बन्ध यज्ञ से है। जलों (ऋत) ने ही सर्वप्रथम गर्भ के रूप में 'विश्वकर्मन्' को धारण किया।[५] जलों से ही प्राण और अग्नि के उद्भव का संकेत प्राप्त होता है।[६] 'तैत्तिरीय-संहिता' में भी आदि में जल की सत्ता स्वीकार की गयी है।[७] 'शतपथ-ब्राह्मण', 'तैत्तिरीय-ब्राह्मण' एवं 'वृहदारण्यकोपनिषद्' में भी आदि में जल की सत्ता मानते हुए इसी से सत्य की उत्पत्ति बतायी गई है।[८] मनु ने भी जल को सृष्टि का आदि माना है।[९] 'अथर्ववेद' के अनुसार उसी ऋत से सर्वप्रथम उत्पन्न हुए थे।[१०] अतः 'ऋत' के द्वारा सम्पूर्ण जगत् धारण किया गया है। ऋग्वेद की इस विचारधारा कि 'यज्ञ के माध्यम से परमव्योम में ऋत के द्वारा सबके धारक ऋत को धारण किया'[११] का विकसित रूप इसी वेद के प्रसिद्ध पुरुष-सूक्त में प्राप्त होता है, जहाँ यज्ञ द्वारा यज्ञ के सर्जन की बात कही गयी है।[१२] इस ऋत अथवा यज्ञ का द्यौ, पृथिवी, समुद्र सर्वत्र विस्तार किया गया, जिससे इनका निर्माण हुआ।[१३] 'यजुर्वेद' में चौंतीस (३४) देवताओं द्वारा इस सृष्टि-यज्ञ का विस्तार बताया गया है[१४] तथा यह भी प्रतिपादित है कि यज्ञ का प्रभाव सर्वत्र विश्व में व्याप्त है और आठ दिशाओं को भी व्याप्त कर रहा है। 'अथर्ववेद' के अनुसार भी प्रजापति ने महान् व्यापक सृष्टि को मूल-तत्त्व (प्रकृति) से तैंतीस (३३) लोकों का निर्माण किया और

---

१. तै.ब्रा.,१.५.५.१: ऋतमेव परमेष्ठी ऋतं नात्येति किञ्चन। ऋते भूमिरियं श्रिता।
२. ऋ.,५.१५.२: ऋतेन ऋतं धरूणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।; मैत्रा.सं.,४.१४.२४३ तुलनीय-आपस्तम्ब श्रौतसूत्र,८.४.२; गोभि.गृह्यसूत्र,२.१.७.
३. ऋ.,१०.११९.३: अप्रकेतं सलिलं सर्वमा इदम्।
४. वही, १०.५.७.: अग्निर्ह नः प्रथमजा ऋतस्य।
५. वही, १०.८२.६: तमिद्गर्भः प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे।
६. वही, १०.१२.७: आपो ह यद्बृहतीर्विश्वमायन् गर्भदधाना जनयन्तीरग्निम्। ततो देवानां समवर्ततासुरेकः।
७. तै.सं. ५.७.५: आपो ह वा इदमग्रे सलिलमेवास।
८. शत. ब्रा., ११.१,६.१.-२; तै.ब्रा., १.१.३.५; बृहदा. उप., ५.५.१: आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त।
९. मनुस्मृति, १.८: आप एव ससर्जादौ तासु बीजमवासृजत्।
१०. अथर्व., ६.१२२.१: विद्वान् विश्वकर्मन् प्रथमजा ऋतस्य।
११. ऋ ५.१५.२
१२. वही, १०.९०.१६: यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन।; तुलनीय-यजु., ३१.१६ ; अथर्व., ७.५.१.
१३. ऋ., १.१५९.१: प्र द्यावा यज्ञैः पृथिवी ऋतावृधा------।
१४. यजु., ८.६१: चतुस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

उन लोकों के ज्ञानार्थ उन्होंने यज्ञ की सृष्टि की।[१] यज्ञ अपने सूत्रों से सब ओर फैला हुआ है और असंख्य दिव्य कर्मों द्वारा विस्तृत है।[२] यह मूलतः दिव्य है, इसीलिए उसे परम गुहा में छिपा हुआ बताया गया है। यहीं से इसे प्राप्त किया गया था।[३] अतः यह सृष्टि का प्रतीक है।

इससे यह प्रतीत होता है कि सृष्टि की संरचना में जो कुछ भी हो रहा है, वह दैवी अलौकिक यज्ञ है जिसे 'ऋत' का नाम दिया गया। 'ऋत' अर्थात् वह जो निरन्तर गतिमान् है। 'ऋ गतौ' (माध., III, २६) धातु से निष्पन्न 'ऋत' सार्वभौम सत्ता की निरन्तर गतिशीलता का द्योतक है। इसी की अनुकरणीय प्रक्रिया को भौतिक धरातल पर यज्ञ का नाम दिया गया। मनुष्यों द्वारा किया गया यज्ञ और कुछ नहीं, अपितु स्वर्गिक यज्ञ का ही दूसरा रूप है, जो स्वर्ग से आकर मानवों के माध्यम से परिकल्पित होता है, जिसके द्वारा रूप की धारा को आगे बढ़ाने अथवा उसका विकास करने में निरन्तर प्रयास करते हैं। इसीलिए वैदिक ऋषि वरुण से प्रार्थना करता है कि "हे वरुण ? मुझसे पाप को रज्जु के समान शिथिल करो, जिससे हम तुम्हारे ऋत की धारा को सम्वर्धित करें। हमारी बुद्धि को वर्धित करते हुए हमारी सन्तति का उच्छेद न करो और न ऋत अथवा यज्ञ की प्रक्रिया या कर्म को ही हिंसित करो"[४] वस्तुतः यज्ञ का विस्तार किया जाता है, क्योंकि यज्ञ अर्थात् सृष्टि तो प्रजापति का कार्य है, जो ब्रह्माण्ड में निरन्तर प्रकृति के माध्यम से चल रहा है। इस यज्ञ में अग्नि आदित्य है और सोम अन्न (हविस्) है। आदित्य अनवरत प्रकृति से सोम रूपी अन्न की आहुति ग्रहण करता रहता है और उससे अनन्त तेज या अग्नि (प्रकाश) सम्पूर्ण ब्रह्माण्ड में फैलता रहता है। यह प्रक्रिया सतत ब्रह्माण्ड में चलती रहती है। इसी कारण जगत् को 'अग्निषोमात्मक' कहा जाता है।[५] यही प्रकृति यज्ञ है, 'ऋत'है, जो अव्यवहित रूप से सृष्टि-रूप में चल रहा है। जो अव्यवहित रूप से सृष्टि-रूप में चल रहा है। मनुष्य तो उससे सगतिकरण कर अपने जीवन को बनाने के लिये उस 'यज्ञ' का विस्तार करता है। यह बात वैदिक वाङ्मय में 'यज्ञ' शब्द के साथ सर्वत्र 'तनु' (विस्तारे) धातु के प्रयोग से भी पुष्ट होती है। वहाँ सर्वत्र यज्ञ का विस्तार ही विहित है।[६] ऋग्वेद के पुरुषसूक्त में भी सृष्टि-विस्तार

---

१. अथर्व., ११.३.५२-५३: एतस्माद् वा ओदनात् त्रयस्त्रिंशत् लोकान् निरमिमीत प्रजापतिः। तेषां प्रज्ञानाय यज्ञमसृजत।

२. ऋ., १०.१३०.१: यो यज्ञो विश्वतस्तन्तुभिस्तत एकशतं देवकर्मेभिरायतः।

३. वही, १०.१८१.२: अविन्दन्ते अतिहितं यदासीद्यज्ञस्य परमं गुहा यत् ।

४. ऋ., २.२८.५: वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण स्वामृतस्य। मा तन्तुश्छेदि वयतो धियं मे वा मात्रा शार्यपसः पुर ऋतोः।

५. बृहज्जाबालोपनिषद्, २.७ अग्नीषोमात्मकं जगत्; तुल. रामपूर्वतापिन्युपनिषद्,४.६.

६. ऋ., १०.९०.६ : यत् पुरुषेण हविषा देवा यज्ञमतन्वत ; वही, १०.९०.१५ : देवा यद्यज्ञं तन्वाना--; यजु., ३४.४ : येन यज्ञस्तायते ; वही,३१.१५ : देवा यद्यज्ञं तन्वाना; शत.ब्रा.,५.२.२.१८ : य एष यज्ञस्तायते ; वही, १.१.१.१२ : यज्ञमेवैतद् वितनोति ; वही, १.१.१.३ : देवा वै यज्ञं तन्वानाः ; ऐत. ब्रा. १.१.४ ; ६.२.७ इत्यादि।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

के लिए स्वयं विराट् ब्रह्म (पुरुष) पशु रूप में बँधा, जो सृष्टि-रूप यज्ञ-प्रक्रिया का रहस्य उद्घाटित कर रहा है।[१] 'यजुर्वेद' के सप्तदश अध्याय में भी विश्वकर्मा भौवन का यज्ञ वर्णित है, जो वस्तुतः यज्ञ रूप में सर्ग रचना का ही वर्णन है।[२] आचार्य यास्क ने भी विश्वकर्मा को विश्व अर्थात् सृष्टि का कर्ता माना है।[३] अतः यह अखिल जगत् उसका यज्ञ है, जिसका विस्तार वह निरन्तर करता रहता है। इसी प्रकार अनेक मन्त्रों में ऋत के कर्म का सम्बन्ध दैवी प्रक्रिया के साथ जुड़ा हुआ है, जो परोक्ष रूप में होती रहती है, जिसे सामान्य जन न तो समझ सकता है और न देख सकता है। इसलिए 'शतपथ-ब्राह्मण' में यज्ञ के विषय में यह कहा गया है। कि यज्ञ जिस प्रकार दिखलाई पड़ता है वैसा नहीं है:—देवता भी परोक्ष हैं और यज्ञ भी परोक्ष है।[४] इसीलिए 'ऋग्वेद' में यज्ञ को स्वर्ग से उतरा हुआ माना गया है।[५] इस मन्त्र से ज्ञात होता है कि ऋषियों ने ध्यान करते हुए ऊपर से गिरते हुए, देवलोक के प्रथम मार्ग यज्ञ को प्राप्त किया था। इस प्रकार यज्ञ कर्म को मानव के प्रथम पूर्वजों ने अपनी परवर्ती पीढ़ी तक परम्परया प्रदान किया। इन पूर्वजों में प्रथम कौन था? इसका उत्तर भी हमें ऋग्वेद से प्राप्त होता है। तदनुसार देवताओं ने समग्र यज्ञों में अग्नि को प्रथम यज्ञ कर्त्ता के रूप में प्रस्थापित किया।[६] अतः मानवीय लोगों में समस्त यज्ञों का होता अग्नि को माना गया।

इस प्रकार यज्ञों में दैवीकरण की योजना से स्पष्ट प्रतीत होता है कि यज्ञ-प्रक्रिया का विकास देवताओं के तादात्म्य के साथ होता है। 'ऋग्वेद' में अग्नि का देवशास्त्रीय स्वरूप इस बात का स्पष्ट द्योतक है कि वह मनुष्यों और देवों के मध्य संदेशवाहक[७], हविवाहक[८] आदि का कार्य करता है। सम्पूर्ण यज्ञ-प्रक्रिया में वह अग्रणी है इसीलिए उसे 'पुरोहित' कहा गया है[९]। देवताओं ने पुरोहित रूप में उसका चयन किया। यही नहीं, यज्ञ के जितने भी सहायक ऋत्विक् हैं वे सभी अग्निस्वरूप हैं, अतः अग्नि से गृह में गृहपति-रूप में प्रतिष्ठित होने की प्रार्थना की गयी है।[१०] अग्नि को समस्त यज्ञ का स्वरूप ही माना गया है

---

१. ऋ., १०.९०.१५ : देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ; तुलनीय यजु. ३१.१५.
२. यजु., १७.१७ ; य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत पिता नः-। वही, १७.२२ : विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
३. नि., १०.२५ : विश्वकर्मा सर्वस्य कर्ता-।
४. शत. ब्रा., ३.१.३.२५ : न वै यज्ञः प्रत्यक्षमिवारभे--परोक्षं वै देवाः परोक्षं यज्ञः।
५. ऋ., १०.१८१.३ : तेऽविन्दन् मनसा दीध्याना यजुष्कन्तं प्रथमं देवयानम् ।
६. वही, ६.१६.१ : त्वमग्ने यज्ञानां होता विश्वेषां हितः देवेभिर्मानुषे जने।
७. वही, १.२.१ : अग्निं दूतं वृणीमहे--; वही, ८.४४.३ : अग्निंदूतं पुरोदधे ; वही १.१६१.३ : अग्निं दूतं प्रति यदब्रवीतन ; शत. ब्रा., ३.५.१.२१ : अग्निरेव देवानां दूत आस।
८. कौषी. ब्रा., ३.२ ; अग्निर्वै भरतः स वै देवेभ्यो हव्यं भरति।
९. ऋ., १.१.१ : अग्निमीडे पुरोहितम् ; तदेव, ३.११.३ ; ८.२७.१ इत्यादि।
१०. वही, २.१.२ : तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्टं त्वमग्निदूतायतः। तव प्रशास्त्रं त्वध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे॥

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

